# खण्डनखण्डखाद्यम्



महामहोपाध्याय श्रीहर्ष विरचितम् ।



गवर्णमेण्टसंस्थापितसंस्कृतपाठशालाध्यक्ष श्रीयुत बाबु रसमय दत्त
महोदयानामनुज्ञया

---

श्रीमदनमोहनतर्कालङ्कारैः संस्कृतम्

संस्कृतयन्त्रे मुद्रितम्

कलिकाता

संवत् १९०५ ।

# खण्डनखण्डखाद्ये

## प्रथमः परिच्छेदः

अविकल्पविषय एकः स्थाणुः पुरुषः श्रुतोऽस्ति यः श्रुतिषु ।
ईश्वरमुमया न परं वन्देऽनुमयापि समधिगतम् ॥

मानापनोदनविनोदनतो गिरीशे
भासेव सङ्कुचितपौरुचितन्तदिन्दोः ।
भेत्तुम्भवानिम्रचितं दुरितं भवानि
नम्रीभवानि घनमङ्घ्रिसरोजयोस्ते ॥

शब्दार्थनिर्व्वचनखण्डनया नयन्तः
सर्व्वत्र निर्व्वचनभावमखर्व्वगर्व्वान् ।
धीरा यथोक्तमपि कीरवदेतदुक्त्वा
लोकेषु दिग्विजयकौतुकमातनुध्वम् ॥

अथ कथायां वादिनोर्नियममेतादृशं मन्यन्ते प्रमाणादयः सर्व्वे तत्त्वसिद्धान्ततया सिद्धाः पदार्थाः सन्तीति कथकाभ्यामभ्युपेयं । तदपरे न क्षमन्ते । तथाहि प्रमाणादीनां सत्त्वं यदभ्युपेयं कथकेन तत् कस्य हेतोः किं तदनभ्युपगच्छद्भ्यां वादिप्रतिवादिभ्यां तदभ्युपगमसाहित्यनियतस्य तस्य प्रवर्त्तयितुमशक्यत्वात् उत कथकाभ्यां प्रवर्त्तनीय वाग्व्यवहारं प्रति हेतुभावात् उत लोकसिद्धत्वात् अथ वा तदनभ्युपगमस्य तत्त्वनिर्णयविजयातिप्रसञ्जकत्वात् । न तावदाद्यः तदनभ्युपगच्छतोऽपि चार्व्वाकमाध्यमिकादेर्वाग्विस्तराणां प्रतीयमानत्वात्

तस्यैव वा अनिष्पत्तौ भवतस्तन्निरासप्रयासानुपपत्तेः । सोयमपूर्व्वः
प्रमाणादिसत्त्वानभ्युपगमात्मा वाक्स्तम्भनमन्त्रो भवताभ्यूहितो नूनं
यस्य प्रभावाद्भगवता सुरगुरुणा लोकायतसूत्राणि न प्रणीतानि तथा-
गतेन वा मध्यमागमा नोपदिष्टाः भगवत्पादेन वा बादरायणीयेषु
सूत्रेषु भाष्यं नाभाषि । प्रमाणाद्यनभ्युपगमेपि प्रवर्त्तन्तां तन्मते
वाचोभङ्ग्यः तास्तु साधनबाधनक्षमा न भवन्ति तावतेति ब्रूमइति
चेन्न प्रमाणाद्यनभ्युपगम्य प्रवर्त्तितत्वं तदीयसाधनबाधनाक्षमतायां
न नियामकं किन्तु सद्वचनाभासलक्षणयोगित्वमित्यवश्याभ्युपेयं भवता
येनाभ्युपगम्यापि प्रमाणादीनि प्रवर्त्तिताः मतान्तरानुसारिभिर्व्यवहारा
अभ्युपगतप्रमाणादिसत्वैर्मतान्तरव्यवहारादिभिरपरैस्तथाभूता इति
कथ्यन्ते । यदि त्वमद्वचसि सद्वचनाभासलक्षणं न भवान् दर्शयितु
मीष्टे तदा अनभ्युपगम्य प्रमाणादि भवता प्रवर्त्तितोयं व्यवहारइति
एतत्तत्त्वस्य प्रोच्यमानेऽपि नास्माकमादरः अन्यथाभ्युपगम्य प्रमाणा-
दीनि भवता प्रवर्त्तितोयं व्यवहारइत्येतावता भवदीयो व्यवहाराभास
इत्यस्माभिरपि वक्तुं शक्यतएव । ननु यदि प्रमाणादीनि न सन्ति व्यव
हारएव धर्म्मी कथं सिद्ध्येत् दूषणादिव्यवस्था वा कथं स्यात् सर्व्व
विधिनिषेधानां प्रमाणाधीनत्वात् । मैवं । न ब्रूमोवयं न सन्ति प्रमा-
णादीनीति स्वीकृत्य कथारभ्येति । किन्नाम सन्ति न सन्ति वा प्रमाणा-
दीनीत्यस्यां चिन्तायामुदासीनै र्यथा स्वीकृत्य तानि भवता व्यवह्रियते
तथा व्यवहारिभिरेव कथा प्रवर्त्त्यतामिति अन्यथा न सन्ति प्रमाणादी
नीति मत मस्माकमारोप्य यदिदम्भवता दूषणमुक्तं तदपि न वक्तुं शक्यं
कीदृशीं मर्य्यादामालम्ब्य प्रवर्त्तितायां कथायां दूषणमुक्तं किं प्र-
माणादीनां सत्त्वमभ्युपगम्योभाभ्यां वादिभ्यां प्रवर्त्तितायां कथायां उता
सत्त्वमभ्युपेत्य अथैकेन सत्त्वमपरेण चासत्त्वमङ्गीकृत्य । न तावदाद्यः
अभ्युपगत प्रमाणादिसत्वं प्रति तादृक्पर्य्यनुयोगानवकाशात् द्वितीये
तु स्वतोऽप्यापत्तेः नं तृतीयः तथैव कथान्तरस्य प्रसक्तेः उभयाभ्युप-

गमानुरोधित्वाच कथानियमस्य अन्यथा स्वाभिप्रायमात्रमभ्य तेनापि
तद्दूषयितुं यत्किञ्चिद्वाग्जालमपि दूषणोऽभिहिते कस्य जयो व्यवतिष्ठताम्
प्रमाणाद्यभ्युपगन्तुरेव यावन्नियमभरयन्त्रणा महती स्यात् तस्मात्
प्रमाणादिसत्त्वासत्त्वाभ्युपगमौदासीन्येन व्यवहारनियमे समयं बद्धा
कथायां प्रवर्त्तितायां भवन्नेदं दूषणमुक्तं युक्तमेव तथा सति स्यात्
योऽयं भवान् स्वाभिप्रायमपि नावधारयितुं शक्तोऽतिदूरत स्तस्मिन्
पराभिसन्धानावधारणप्रत्याशा । अथ वादीकृत्य दुर्वैतण्डिकं तस्मिन्
बोधोऽभिधीयतइत्येव नेष्यते शिष्यादयस्तु तस्य कथानधिकारं ज्ञा-
प्यन्ते अतएव भाष्यकारः सप्रयोजनमनुयुक्तो यदि पद्यतइत्याह स
नतु प्रतिपद्यसइति । नैवम् । शि[illegible]न् प्रत्यपि चार्व्वाकादेर्दोष्य-
त्वमित्येवाभिधातव्यम् । कथञ्च त[illegible]त् तस्य कथाप्रवेशात्तयोस्त-
द्बाधाक्षमत्वात्कथायामेव हि निग्रहः । नापि द्वितीयः तथाहि
स्यादप्येवं यदि कथकप्रवर्त्तनीयवाग्व्यवहारं प्रति प्रमाणादीनां हेतु-
ता तत्सत्त्वानभ्युपगमे निवर्त्तेत नचैवं सम्भवति तथा सति तत्सत्त्वान-
भ्युपगन्तॄणां वाग्व्यवहारस्वरूपमेव न निष्पद्येत हेत्वनुपपत्तेः । उक्त-
श्चायमर्थो यन्माध्यमिकादिवाग्व्यवहाराणां स्वरूपापलापो न शक्यत
इति । अथ मन्यसे कथकवाग्व्यवहारं प्रति हेतुत्वात् प्रमाणादीनां
सत्त्वं सत्त्वाच्चाभ्युपगमः यत्सत्तदभ्युपगम्यतइतिस्थितेरिति । नैवं ।
कयापि नियमस्थित्या प्रवृत्तायां कथायां कथकवाग्व्यवहारं प्रति
हेतुत्वात् प्रमाणादीनां सत्त्वं सत्त्वाच्चाभ्युपगमो भवता प्रसाध्यः
कथनात्पूर्व्वं तत्त्वावधारणं वा परपराजयं वा अभिलषद्भ्यां कथका
भ्यां यावता विना तदभिलषितं न पर्य्यवस्यति तावदनुरोद्धव्यम् तच
व्यवहारनियमस्यानुबन्धादेव द्वाभ्यामपि ताभ्यां सम्भाव्यतइति व्यवहार
नियमसमयमेव बध्नीतः सच प्रमाणेन तर्केण च व्यवहर्त्तव्योवादिना
प्रतिवादिनापि कथाङ्गतत्त्वज्ञानविपर्य्ययलिङ्गप्रतिज्ञाहान्याद्यन्यतमं
निग्रहस्थानं तस्य दर्शनीयम् तदुत्पादने प्रथमस्य भङ्गोव्यवहर्त्तव्य

नियमबन्धेपि हेतुर्वक्तव्यः तथा च सोपि हेतुः कथायां प्रवृत्तावा-मभिधातुं युक्तइति प्रमाणसत्त्वाभ्युपगमहेत्वभिधानवत् प्रत्यवस्थान मनवकाशं द्वाभ्यामपि वादिभ्यां विचारप्रवृत्त्याभिलष्यमाणतत्त्वव्यव-स्थापनमूलत्वेन व्यवहारनियमस्य स्वेच्छयैव परिगृहीतत्वात्। नचैवं प्रमाणानुपन्यासे स्वेच्छामात्रगृहीतमूलत्वान्मूलापरिशुद्धिसम्भवेन . सर्व्व विचारविचार्य्यतत्फलविप्लवापत्तिः स्यात्। आवेद्यमानादिपारम्पर्य्या-गतस्य लोकव्युत्पत्तिगृहीतत्वादस्य च तस्यान्यथाभावासम्भाव्यता स्वयमस्वतःसिद्धिसुदृढत्वात्। नच प्रमाणादीनां सत्तापीत्थमेव ताभ्या मङ्गीकर्त्तुमुचिता तादृशव्यवहारनियममात्रेणैव कथाप्रवृत्त्युप-पत्तेः प्रमाणादिसत्तामभ्युपे[illegible] तथा व्यवहारनियमव्यतिरेके कथा प्रवृत्तिं विना तत्त्वनिर्णय[illegible]स्य वाभिलषितस्य कथकयोरपर्य्यव सानात्। नापि तृतीयः लोकव्यवहारो हि प्रमाणव्यवहारो वा स्यात् पामरादिसाधारणव्यवहारो वा। नाद्यः। विचारप्रवृत्ति मन्तरेण तस्य दुर्न्निरूपत्वात् तदर्थमेव च पूर्व्वं नियमस्य गवेषणात्। नापि द्वितीयः शरीरात्मतादीनामपि तथा सति भवता स्वीकर्त्तव्यता पातात्। पश्चात्तद्विचारबाध्यतया नाभ्युपेयतइति चेत् तर्हि प्रमाणा दयोपि यदि विचारबाध्या भविष्यन्ति तदा नाभ्युपेया एव अन्यथा तूपगन्तव्या इति लोकव्यवहारसिद्धतया सत्त्वमभ्युपगम्यतइति तावन्न भवति। नापि चतुर्थः यादृशोभवताप्रमाणादीन्यभ्युपगम्य व्यवहार नियमः कथायामालम्ब्यते। तस्यैव प्रमाणादिसत्त्वासत्वानुसरणो-दासीनैरस्माभिरप्यवलम्बनात्। तस्य यदि मां प्रतिफलातिप्रसङ्ग-कत्वं तदा त्वां प्रत्यपि समानः प्रसङ्गः।

स्यादेतन्नियतवाग्व्यवहारक्रियासमयबन्धेन कथां प्रवर्त्तयतापि व्यवहारसत्ताभ्युपगन्तव्या नहि सत्तामनभ्युपगम्य व्यवहारक्रियाभि धातुं शक्या। क्रिया हि निष्पादना असतः सद्रूपताप्रापणमिति यावत् प्रमाणैर्व्यवहर्त्तव्यमिति नियमबन्धने प्रमाणकारणभावस्य नियमात्

तद्भावस्य नियतपूर्व्वसत्वरूपं कारणत्वं प्रमाणानामनादाय न पर्य्यव-
स्यात्। दूषणानामाक्षिप्तत्वेन भङ्गावधारणनियमवचने साधनाङ्गानां
व्याप्त्यादीनां सत्वेन तद्विपक्षस्य तद्रूपताव्यवहारनियमवादे च
कारणत्वमेव तस्य तस्य सत्वमङ्गीकृतमिति चेदिदमुच्यते प्रमाणा-
दीनां सत्तामनभ्युपगम्य कथारम्भाः प्रवर्त्तन्त इति। नैवम्। एभिरपि
बाधकैः कथायामारब्धायामेवाभिमतस्य प्रसाधनीयत्वे पूर्व्वोक्त बा-
धायामनिस्तारात्। न च व्यवहारनियमस्य स्वेच्छाकृतस्यैव प्रमाणादि
सत्तास्वीकारपर्य्यवसायितया नायं दोषः स्यात् यतः सत्ताज्ञानस्य
तदाङ्गत्वं न तु सत्तायाः। तत्र किं सत्तावगममात्रात्तदभ्युपगम इति
मन्यसे अबाधितात्तदवगमाद्वा। न तावदाद्यः मरुमरीचिकादौ जल-
रूपतासद्भावाभ्युपगमप्रसङ्गात्। द्वितीयेऽपि किं वादिप्रतिवादि
मध्यस्थमात्रस्य तस्यापि कथाकालमात्र एव बाधितावगमाभावात्।
अथवा कस्यचिदपि कालान्तरेऽपि च बाधितबोधविरहात्। नाद्यः
अतिप्रसङ्गात् पुरुषत्रयावगतस्यापि एकत्वावगतस्य च पुरुषा-
न्तरेण तेनापि क्षणान्तरे बहुलं बाध्यतादर्शनादिति। न चासाव-
र्थोऽसन्नपि द्वित्वादिपुरुषमात्रपूर्व्वजाततत्प्रतीत्यनुरोधाद्बाधदर्शने
सत्यपि तथैव सन्नित्यभ्युपगम्यते तस्माद्द्वितीयः पक्षः परिशिष्यते
यत्र सर्व्वप्रकारेण बाधितत्वं नास्ति तत्सदित्यभ्युपगन्तव्यम्। तदित्थं
यदि नाम वादिप्रतिवादिमध्यस्थमात्रस्य दूषणादिसत्तावगमः कथा
कालमात्रे तैरबाध्यमानः कथाङ्गत्वेनाभ्युपेयते किमायातं सर्व्वप्रका-
राबाधिततत्तत्सत्तावगमायत्ततत्सत्त्वाभ्युपगमकथाङ्गताङ्गीकारस्य
कतिपयप्रतिपत्तृकतिपयकालतथात्वावगमादेव च प्रायेण लौकिक
व्यवहारः प्रणीयते तादृशश्चायं सत्त्वावगमः कथाङ्गमेतदुच्यते
व्यावहारिकीं प्रमाणादिसत्तामादाय विचारारम्भ इति। तस्माद्यादृ-
ग्व्यवहारनियमः कृतः तन्मर्य्यादानेन नोल्लङ्घितेति। यथाविकारव्यव-
हारे मध्यस्थावगमः स विद्यते यस्य च वचसि नैवं तस्यावगमस्तस्य

पराजयः यत्र वाद्युक्तनिग्रहस्थानावगमः स निगृहीतः तदितरस्तु न तथेत्यादिनियमएव कथारम्भाय ग्राह्यः अनेन नियमेन व्यवहर्त्तव्य मित्यस्य च्चायमर्थोऽनेन नियमेनोक्तमनेनेति मध्यस्थावगमस्य विषयी भवितव्यमिति। नच वाच्यमन्ततस्तदवगमस्यापि सत्ताभ्युपेयेति। तस्यापि सत्ताचिन्तायां तत्सत्तावगमान्तरस्यैव शरणत्वात्। नन्वेवमन वस्था तदनुसरणावश्यम्भावानङ्गीकारात् एवं त्रिचतुरज्ञानजन्मनो नाधिकमतिरिति न्यायात्। नचान्तिमासत्त्वे पूर्व्वपूर्व्वप्रवाहासत्त्वा पत्ति स्तथाचावगममादायापि न निस्तार इति वाच्यम्। अस्त्वेव हि तथा [illegible]तुरज्ञानकक्षागवेषणामात्रविश्रान्तेन विचारेण ततःपर- मननुसरणरमणीयेनैव समयं बद्धा कथाया मिथःसम्प्रतिपत्त्या प्रवर्त्तनात्। अन्यथा प्रमाणादिसत्ताभ्युपगमेपि ज्ञानानवस्थाया दुष्परिहरत्वात्। नच वाच्यं मत्पक्षे स्वरूपसत्ताज्ञानेन व्यवहारस्य चरितार्थयितुं शक्यत्वात् न ज्ञानस्य परम्परानुसरणमुचितं नत्वेवं त्वत्पक्षे ज्ञानस्वरूपसत्ताङ्गीकारप्रसङ्गादिति। स्वरूपसत्तामादा- यापि परिहरतोऽनवस्थाप्रसङ्गस्य स्वप्रकाशप्रस्तावे वक्तव्यत्वात्। यथा त्वत्पक्षे स्वरूपसदविशेषेऽपि ज्ञानस्वरूपसत्तैव परं व्यवहारोप- पादिका न घटादिसत्ता एवमेवासत्ताविशेषेपि ज्ञातमेवासद्व्यवहा- रोपपादकं नान्यत्। असत्त्वोपपादकञ्चेति व्याहतमिति चेन्न सदुप- पादकमिति कुतो न व्याहतम्। नहि सदुपपादकमसच्चेनेति क्वचिदा वयोः सिद्धम्। ननु तदसत्ताविशेषात्तत्कार्य्यस्यान्यदापि प्रसङ्गः न कार्य्यस्याद्यसत्ताक्षणइवान्यदापि सामग्रीसत्ताविशेषात्तवापि किं ना- न्यदा कार्य्यजन्म। अथ न मम तदानीन्तनं सामग्रीसत्वं तदातनस्य कार्य्यजन्मनो नियामकं किन्तु ततः प्राक् सामग्रीसत्वं तथादर्शनात् तर्हि ममापि कालान्तरस्थमपि तदसत्वं तदातनकार्य्यजन्मनोनियाम- मकं तथादर्शनादेव। मम तदव्यवहितोत्तरत्वं तदा कार्य्यनियामक मिति चेत् न समसमयत्वादागन्तुककालाविशेषेण नियम्यनिया-

मकार्य्यव्यवस्थानुपपत्तेः तस्मादन्त्यावस्थाया एव सामग्र्याः सदा कार्य्यनि-
यमोऽभ्युपेयः तदादर्शनादित्येव मन्तव्यम्। तथा च समः समाधिः
तथापि कार्य्यजन्मकालस्य कोविशेषः। कार्य्यजन्मैव। अन्यथा यदि-
शेषान्तरं तदपि विशेषान्तरवतः कालस्य स्यादिति अपर्य्यवसानमेव
पर्य्यवस्येत् तथापि तत्कालस्यानुगतं किं रूपमिति चेन्न रूपान्तर
वतोऽपि किं रूपमित्यपि पर्य्यनुयोगस्यानुवृत्तेः। किञ्च "अन्तर्भावित
सत्त्वञ्चेत्कारणं तदसत्ततः। नान्तर्भावितसत्त्वञ्चेत्कारणं तदसत्ततः।"
तथाह्यन्तर्भूतसत्वे यदि कारणत्वं तदा स्वविशिष्टे स्ववृत्तिरसतः
स्वाश्रयत्वमापादयति। विशिष्टस्यार्थान्तरत्वेपि च स्वस्मिन् स्ववृत्ति
व्यतिरेकवत् स्वविशिष्टे स्ववृत्तिव्यतिरेकानियमदर्शनात् न सैव सत्ता
तस्मिन्निति अन्यस्या स्तत्वाविशिष्टवृत्त्यभ्युपगमे तामसन्निवेश्य कारण
त्वमभ्युपगन्तुः सर्व्वथैवं कारणमसत्पर्य्यवस्यति। अपरापरसत्तानिवे-
शने वा पर्य्यवसानमेव। नच सत्ताभेदानन्त्यमस्त्वेवेत्यपि मादृशादि-
का निस्ताराय सत्ताभेदे हि सद्बुद्धिव्यवहारानुगमननिबन्धनशक्तिमः
प्रथमापि सत्ता न स्यादिति सत्वबुद्धिमिष्टवतो मूलमपि ते नष्टमिति
कष्टतरम्। नच स्वरूपसत्तोपगमाय स्वस्ति भिन्नानप्यनुगत बुद्ध्या-
द्याधानपदेऽभिषिञ्चता त्वया जातिमात्राय जलाञ्जलिर्वितीर्य्यत।
माभूदनुगतिः स्वरूपसत्वस्येति च वदन् तद्धर्म्मिणीं कारणतां कथमनु-
गमयितासीति। किञ्च स्वरूपसत्वं स्वरूपात् घटाद्यात्मनो नाधिक
मसतोपि स्वरूपं स्वरूपमेव न ह्यसन् घटादिर्न घटादिः तथा सति
घटादिर्नेत्यपि न स्यात् असतोऽघटादित्वात्। अथ सदपि सत्ता
मनन्तर्भाव्य कारणं तदानीमसदपि तत्तथास्तु सत्तासत्तयोः कारण
कोट्यप्रवेशाविशेषात्। अथ न सत्ता कारणकोटिनिविष्टा किन्तु
कारणत्वं सत्वं नियतपूर्व्वसत्तां हि कारणतामन्वहृति मन्यसे तर्हि
मत्पक्षे सैव कारणतास्तु तर्हि कारणसत्तामभ्युपगतवानसीति घट्ट-
कुट्यां प्रभातमिति चेन्न भावानवबोधात् सत्तामसतीमभ्युपगच्छ-

तामि सत्ता मयाभ्युपगतैव। अन्यथा कासावसत्तीति त्वमपि किं सत्तान्तःसत्तामन्तर्भाव्य कारणत्वमिच्छसि। गत्वैवं पूर्व्ववत् क्वापि सत्त्यागो वा अनवस्थायां पर्य्यवसानं स्यात्। असत्ताविशेषात् कारणनियमः कथं स्यादिति चेन्न सत्ताविशेषेपि तुल्यत्वात्। सत्वेऽप्यन्वयाद्यनुविधानं तस्य तज्जातीयस्य वा त्वत्पक्षेऽसत्वाविशे-षात् व्यतिरेकः परं सोप्यनियतो यदा कारणाभाव स्तदा कार्य्या-भावावश्यम्भावानभ्युपगमात् नित्यासतः कारणस्यासत्वएव कदाचि-त्कार्य्योत्पादात् अन्वयस्तु न कदाचिदपीति चेन्न तुल्यत्वात्। अन्वयो नास्तीत्यभ्युपगच्छतापि अन्वयोपगमात्। अन्वयस्यापि सत्तान्तर्भावने कथितदोषापत्तेः। एतेन "आम्रामोदकाष्टमा ये ये चोपार्ज्जित मोदकाः। रसवीर्य्यविपाकादि तेषां तुल्यं प्रसज्यते" इत्यस्यापि बाधकत्वमाम्रामोदकायते। सत्तान्तर्भावानन्तर्भावाभ्यां प्रत्यादेशात् आम्रामोदकादिनापि च रसवीर्य्यविपाकादिजननात्। तदसत्कार्य कार्य्यं स्यादिति चेन्न सत्तामन्तर्भाव्य कार्य्यत्वोपगमे कारणत्कार्य्येपि उक्तदोषस्यानन्तर्भावे वा विशेषस्य पूर्व्ववदावृत्तेः तस्मात् "पूर्व्व सम्बन्धनियमे हेतुत्वे तुल्यएव नौ। हेतुतत्ववहिर्भूतसत्वासत्वकथा वृथा।" आस्तां प्रतिबन्दिग्रहग्रहः कथं पुनरसतः कारणत्वमव-सेयं प्राक्सत्वनियमस्य विशेषस्यानभ्युपगमात् असत्वस्य चाविशेषा-दिति चेन्न इदमस्मान्नियतं प्राक्सदितिबुद्ध्याविशेषात्। भ्रान्त्यैवं बुद्धिगोचरेतिप्रसङ्ग इति चेन्न यादृश्या हि धिया भिचतुरकक्ष्या बाधानवरोधविश्रान्तया वस्तुसत्वनिश्चयस्ते तादृश्यैव विषयीकृतस्य ममापि कारणतानिश्चयः केवलन्ततः परास्वपि कक्षासु बाधात् पूर्व्व पूर्व्वभ्रान्तिसम्भवेन न तावता सत्वावधारणं वयं मन्यामहे इति वि-शेषः। परदर्शनसिद्धान्तस्य भूरिकक्षाबाधाविनापि ततः परकक्षाबाध्य-मानत्वेनात्यन्ताभावोपगमात् अन्यैकदर्शनपरिशेषः स्यात्। एतेन सत्वाविशेषात् कथं कस्यचित्कस्य चिचतुरकक्षाबाधाविलम्बनाभि-

त्यपि निरस्तम्। अनेकबुद्धिविषयत्वादस्यां को विशेष इति चेत् यदा
कदापि बाह्यबुद्धिविषयतैव अन्यथा अथवा कथमन्यदा बाह्यबुद्धि
विषयतया अन्यदा सत्त्वं स्यात् सदासत्त्वमन्यदा त्वेन गृह्यत इति चेत्
अल्पकालिकमेव तर्हि तत्तदाकारबोधयोगीति समानं तदेतत्
कल्पितविलक्षणमिति गीयते असती सा न विशेषिका सती सा नैकैक-
भिसम्बन्धेन सम्बन्धितिरपि सती भवेति एतच्च प्रतिवक्तव्यः आर्यं ताव-
द्व्यवहारोपपादकतया द्वाभ्यामप्यनुमतं तस्यापि जिज्ञासायां निष्कुर-
कश्चा विश्रान्तगवेषणस्य यदि सत्तोपपन्ना भविष्यति तदा सत्ता तेनैव
मुपपादितम्भविष्यति। अथासत्ता तस्य पर्यवस्यति तदा असत्त्वैव तेनैव
मुपपाद्यत इति स्वीकर्त्तव्यं भ्रमविषयेणैव भ्रमे विशिष्टत्वव्यवहारः।
अविचार्यैव तावत्तस्य सदसत्त्वं विचार आरब्धव्यः अन्यथा प्रथममेव
मतिकर्द्दमे कथारम्भणमप्यसमापद्येत स्वीकृतश्च भवतापि भविष्य-
दादिविषये विज्ञाने विशिष्टव्यवहारनिदानत्वमसतो विषयस्य कारण
ग्रहोत्त्व विशेषणमसदेव कार्य्यं नच कालान्तरसम्बन्धिनी सत्ता तस्या
एकदान्यत्र नान्यदापीति वैधर्म्यमेतयोरपीति वक्तव्यं विशिष्टव्यवहार
प्रवृत्तिसमये द्वयोरप्यसत्ताविशेषात्। प्रयोजनानुपयुक्ते काले
तस्य स्वरूपतोवस्थानं पाटच्चरलुण्ठिते वेश्मनि यामिकजागरणवसान्त
मनुहरति तथापि कालान्तरस्थितया घटादिकं स्वरूपतो विशेषणतया
व्यवच्छिन्नं तद्विज्ञानेन स्वभाववशात् स्वविशेषणत्वेनोपादीयते। नन्वेव
मत्यन्तासद्भवितुमर्हति तस्य स्वरूपतो विशेषणतया अवच्छिन्नतयानङ्गी-
कारात् कुत्र स्वभावतो विज्ञानं सम्बन्धि नियम्यते न उत्तमस्य अस-
तोपि तदेव रूपं तस्य नियतस्वरूपतैव नियतविशेषणस्यैकसत्त्वादन्य-
थातिप्रसङ्गात् भ्रान्तिविषयेषु रजतादावेवमतिविस्तारेण।

अपरे पुनस्तत्रापि शून्यताङ्गीकारे मनः प्रणयमनासादयन्तः
सर्वमिदमसदेव विश्वमित्यभिधातुं सहसैवानुत्सहमाना मन्यन्ते यावं

तावत् स्वप्रकाशं स्वतएव सिद्धरूपं न खलु विज्ञाने सति जिज्ञासोरपि कस्यचिज्जानामि न वेति संशयः न जानामीति वा विपर्य्ययो व्यतिरेक-प्रमा वा तेन जिज्ञासितस्यातत्त्वज्ञानव्यतिरेकप्रमाणामभावसमुदायः स्वाव्यापकं जिज्ञासितस्य प्रमितत्वमानयति अन्यथा हि जिज्ञासित प्रमितत्वव्यतिरेकव्यापकं जिज्ञासितव्यतिरेकोऽपेक्षि ज्ञानमविश्रित जिज्ञासस्य स्यादतः सर्व्वजनस्वात्मसम्वेदनसिद्धं बोधस्य स्वरूपम् व्यवसायस्यानुव्यवसायनियमात् न तत्र संशयादिरिति चेन्न यत्रैवानु-व्यवसायेयत्ता नापेया तत्र जिज्ञासायामात्मधर्म्मिकं तत्संशयमारभ्य व्यवसायविषयपर्य्यन्तं संशयाक्रान्तेर्दुष्परिहरत्वात्। विषयिसद्भाव-संशये च तद्विषयेऽपि संशयस्य सम्भवात् एवं हि निपतुरसम्वेदन कक्षाक्षानचैत्यनियमाभ्युपगमोपीति स्वप्रकाशेनुमानमेयव्यवस्थाया अभावादेव तदाश्रया दोषा निरवकाशाः अन्यथा तु बोधस्वरूपमेव न सिद्ध्येत् यदि हि विज्ञानं परतः सिद्ध्येत् तदा अनवस्था स्यात् नच बाध्यमवश्यवेद्यता वित्तेर्नाभ्युपेयते स्वार्थव्यवहारस्तु स्वरूपसत्तया प्रसूयत इति नानवस्थेति यतस्तस्यां प्रमाणानुपन्यासे स्वरूपसत्तापि कुतो यया व्यवहारोपपत्तिः को ब्रूते सती सा वित्तिरसत्येव न कुतः सामान्यतो वित्तेस्तथात्वविधावपेक्षितसिद्ध्या यत्र विशेषरूपायां प्रमाणप्रवृत्तिः तदा तत्र सत्वसाधनम्। सत्वेपि जिज्ञासायां सत्यां प्रमाणव्यवहारसत्तैव वा अन्यद्वा प्रमाणमस्त्येवेति चेन्न तस्यापि सत्वं कथमित्यनवस्था स्यात् शेषासिद्ध्या सर्वासिद्धिर्वा प्रसज्येतेत्यर्थासिद्धि पर्य्यन्तस्य व्यसनस्य दुस्तरत्वात् सेयमप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिद्ध्यतीति। घटसत्तां हि व्यवहरता प्रामाणिकेन तत्र प्रमाणस-द्भावो वाच्यः यदि प्रमाणमनुपन्यस्य सात्तीत्यङ्गीक्रियते तदा वैपरीत्य मेव किन्न स्यात् ततश्च घटसत्तायां प्रमाणसत्ता दर्शनीया। तथा च प्रमाणसत्तापि तत्प्रमाणसत्तामन्तरेण न प्रामाणिकस्याङ्गीकारार्हा सर्वप्रमाणसत्तानिष्ठत्वेर्वस्तुसत्तानिष्ठत्तिर्नियतत्वात्। अन्यथा सतम

रसादेरप्यापत्तेरिति, अयमनवस्थादोषश्च स्वप्रकाशवादिनः स्यात् ।
यदि हि वित्तिरेव प्रमाणसत्तां परोक्षीकार्य्येत तदा घटसत्तामपि तथै-
वाङ्गीकार्य्यतामिति घटेऽपि तथा प्रमाणोपन्यासायासः । अथ ना-
नवधानसमयवित्तितद्वित्तिधाराभ्युपगम्यते, किन्नाम कदाचित् कुत-
श्चित् वित्तिः प्रमीयतइति सर्व्वा वित्तिः प्रमाणसिद्धैवेत्यभ्युपेयत इति
चेन्न स्यादप्येवं यदि घट इति घटं जानामीत्यतोऽधिका घटवित्ति
तद्वित्तिधारया विषयभावेन प्रविष्टया तादृग्विषयशतभारमन्थरा
वित्तिरस्मदादेरत्यन्तयत्नेनानुभूयेत । यद्यस्मदादिविलक्षणजन्मनि सा
सम्भाव्यते तदा यस्या अपि वित्तेस्तावद्विषयगर्भिताधी विषयः सा-
प्यन्यथा कथं चिदुल्लेख्येत्यत्र प्रमाणाभावश्च निर्म्माणापत्तिश्च । नहि
स्वमनन्तर्भाव्य कयाचिद्धिया स्वप्रवाहो ग्राह्यः तथा सति स्वप्रकाश
सिद्धेः अतएवान्योन्यविषयतापि निरस्ता सविषयकान्योन्यग्रहे स्वग्र-
हापत्तेः । नच पुरुषान्तरेण सा प्रमास्यते नतु तदभावइति ते प्रमा-
स्ति तदर्थमपि प्रमाणान्तरसद्भावपरम्परापत्तेः । नचैवं घटसामग्री
तत्सामग्रीगवेषणेऽप्यनवस्था स्यात् वैषम्यात् यदि घटसामग्री तत्सा-
मग्रीधारा कुत्रचिद्विच्छिद्येत तदा घटः सदातनः स्यादित्यर्थापत्त्यैव
घटः सामग्रीपरम्पराविच्छेदविरहितएव प्रमीयते यदि तु ज्ञानेप्येवं
स्यात् तदा स्वस्य प्रवेशात् स्वप्रकाशापत्तिः प्रवेशादनवस्था अवेदने
शेषासिद्ध्या सर्व्वासिद्धिरिति व्यसनं दुरुत्तरमेव । ये च मानमेयभावा
श्रया दोषाः कीर्त्तनीयास्तेऽपि प्रसज्येरन् । नच तैर्द्दोषैर्मास्त्वेव ज्ञान
मित्यास्थेयं स्वतः सर्वसिद्धस्य दुरपह्नवत्वात् स्वप्रकाशाङ्गीकारादेव
चानुभवस्य सर्वदेशकालेष्वप्रमाणत्वात् प्रकाशात्मतामात्रस्यैव स्वतः
सिद्धिसम्भवे जडात्मनां धर्म्माणां केषामपि तदन्तर्भावानुपपत्तिः
अतएव धर्म्मापग्रहप्रवर्त्तिषु वाग्व्यवहाराविषयत्वं कालानवच्छेद
मादाय नित्यत्वोपचारः देशानवच्छेदमादाय विभुत्वव्यपदेशः प्रकाराव
च्छेदविरहनिबन्धनश्च सर्वात्मत्वाद्वैतादिव्यवहारः सौगतप्रभाकरयोः

अभावे अभावं प्रति नैयायिकवचाभावानतिरेकस्वीकारादिवाद्वैता व्याघातः अमविषयनिषेधवच प्रतियोगिनः सर्वथैवासिद्धावपि न काचित् क्षतिः। तदेतत् श्रुत्वा प्रमाणेनोपलक्षणन्यायात् तात्पर्यतः प्रकाश्यते तेन परमार्थतोऽभिधानाभिधेयभावविरहे तात्पर्यतः श्रुतिस्तस्मिन्नविवादभाजां पराभ्युपगमरीत्या प्रमाणमित्युच्यते वस्तुतस्त्वात्मसिद्धमेव चिद्रूपम्। ननु च स्वप्रकाशत्वं ज्ञानस्येत्यनुपपन्नमिदं क्रियाकर्म्मभावस्य भेदव्यतिरेकेणानुपपत्तेः कार्य्या क्रिया हि कर्म्मणो भवति कर्म्म च कारकं क्रियायाः नच स्वेनैव स्वनिष्पादनं शक्यं पूर्व्वापरभाव विशेषस्य हेतुहेतुमद्भावरूपत्वात्। नच तस्मादेव तदेव पूर्व्वमपरञ्च सम्भवति तदनवच्छिन्नकालविशेषस्य तत्पूर्व्वशब्दार्थत्वात् तदा च तस्य सद्भावस्वीकारे स एव कालस्तदवच्छिन्नोनवच्छिन्नश्चेति विरोधात्। नैवम्। क्रियायाः कर्म्मजन्यतानियमानङ्गीकारात् सर्वथैवानागतविनाशे तदसम्भवात्। क्वचिज्जनकतामादाय कर्म्मणि कारकत्व व्यपदेशात् कारणव्यापारविषयत्वाद्वा परसमवेतक्रियाफलभागित्वाद्वा कर्म्मलक्षणात् विनापि क्रियाजनकत्वेन कर्म्मव्यवहारोपपत्तेः। किञ्च तत्कर्म्मत्वं यत् स्वं प्रति विरुध्यते परसमवेतक्रियाफलभागित्वमिति चेन्न अपादानस्यातिव्याप्तेः अपादानं कर्म्मापीति चेन्न वृक्षात्पर्णं पतति वृक्षं पर्णं पततीत्यपि स्यात् विवक्षातः कारकाणि भवन्तीति तदविवक्षातो नैवमिति चेन्न वस्तुसतस्तद्रूपस्य यदि विवक्षा स्यात् तदा तदपि स्यात् अपादानस्य कर्म्मत्वं न विवक्ष्यतइति शाब्दिकसम्प्रदायइति चेत् तर्हि निरुक्तसर्व्वकर्म्मव्यवहारेऽपि स्वकृत कर्म्मलक्षणानुरोधेन कर्म्मत्वमभ्युपगच्छता वस्तुमात्रं कर्म्मत्यपि लक्षणं सावकाशितं स्यात् कथञ्च लोकोत्तरप्रश्नेन निरुक्तसर्व्वकर्म्म व्यवहारेपि कर्म्मत्वमस्तीति ज्ञातम् अपादानेतरदीदृशं कर्म्मेति चेन्न तथापि नदी वर्द्धतइत्यादौ तदृद्धेरप्राप्ततीरभागप्राप्तिफलायाः सकर्म्मत्वापत्तेः अपादानेतरदित्यस्य स्थाने शब्दानाशकेतिकरणेऽप्यस्य

तदवस्थत्वात् विनाशलक्षणायां वृद्धौ तदयोगाच्च वृक्षं त्यजतीत्यादाव कर्म्मकत्वप्रसङ्गाच्च । आत्मानं जानामीत्यत्र च परत्वाभावादकर्म्मक-त्वापत्तेः । तथाप्युपाधिभेदात्परत्वं कर्तृत्वभोक्तृत्वाद्युपहितस्यैवात्मनो ज्ञेयत्वाभ्युपगमादिति चेन्न यतोऽस्तु तावदेवं यथा कथञ्चित्तथाप्यध्यात्म विदो निरुपाधिमात्मानं जानतो ज्ञानं नात्मकर्म्मकं स्यात् । पच्यते ओदनः स्वयमेवेत्यादौ कर्म्मकर्त्तरि का गतिः स्यात् सर्व्वज्ञमीश्वर-मन्यमानेन च नित्यज्ञाने तस्मिन् भगवति फलशालित्वस्यानभ्युपगमात् तं प्रत्येतल्लक्षणासिद्धिः तस्माद्व्याकरणकारैः शब्दसिद्ध्यर्थं नदी वृद्ध्यादिवत् कर्म्मापि परिभाषितमित्यलं तदनुगतलक्षणगवेषणया शेषश्चेत्तराभिसन्धौ स्वप्रकाशवादे निर्वक्ष्यामः ।

ननु चाभेदे विषयविषयिभावस्यैवासङ्गतत्वम् । विषयित्वं हि विषयसम्बन्धिता सम्बन्धश्च भेदमन्तरेणासम्भवदवस्थितिः सम्बन्धमितेः सम्बन्धिस्वरूपभेदमितिव्यतिरेके वैपरीत्यावधारणात् । नैवम् । विषय विषयिभावो हि सम्बन्धो न सम्बन्धिस्वरूपाद्भिन्नः तथाभूतत्वेऽपि च अन्ततस्तत्सम्बन्धस्यापि स्वाश्रयात्मकत्वमभ्युपेतव्यमनवस्थाभयात् तथा सति च सैव यथा सम्बन्धमितिः सम्बन्धस्वरूपात्तत्सम्बन्धिनोर्भेदमना-दायैव पर्य्यवस्यतीत्यभ्युपगन्तव्यं स्वभावसम्बन्धस्येतरसम्बन्धमर्य्यादाति-शायित्वात् तथा विनापि सम्बन्धिभेदं विषयविषयिभावात्मायं सम्बन्धः पर्य्यवसास्यति तदवगमोपि तदवगमाव्यतिरेकेणैव भविष्यति कोवि-रोधः । नचैवं घटतज्ज्ञानयोर्यादृग्विषयविषयिभाव स्तादृगेवायापि स्वप्रकाशविषयविषयिभावान्यत्वे बाध्यतैव स्यात् अस्त्ये वस्तु विद्याविल मानघटतज्ज्ञाने बाध्यत्वं परमार्थसति तु स्वप्रकाशे पारमार्थिकत्वमिति द्वयोरननुगमेपि न दोषः । अथ वा स्वात्मना सह क्रियाकर्म्मभावो विषयविषयिभावो वा स्वप्रकाशार्थं इति नाभ्युपेयमेव यथा तु भवतां सत्तासम्बन्धादितरत्र सद्व्यवहारव्यवस्था सत्ता स्वयमेव सद्रूपा नच तावता स्वात्माश्रयता तथात्मप्रकाशमपि स्वतएव सिद्धस्वरूपम् ।

अथवा यथा बहुव्रीहिसमासे तद्गुणसंविज्ञाने गुणमादायैव प्रधानस्या न्यपदार्थस्य बहुव्रीहिसिद्धपदप्रतिपाद्यता तथा विज्ञानस्याविषयमपि स्वात्मानमादायैव स्वविषयव्यवहारप्रवर्त्तनं समर्थतां सोयं गुरूणां सविषयकविज्ञानस्वप्रकाशतापक्षो न ब्रह्मस्वप्रकाशता तत्र विषयाभा- वात् एतावन्मात्रेण तु स्यात् यथा स्वविषयेपि कुटादौ बहुव्रीहि वाक्यं व्यवहारं प्रवर्त्तयति तथा ज्ञानमविषयेप्यात्मन्यविद्यादशाया मिति । तदेवं यद्यदन्यत्र दृष्टवैधर्म्यं स्वप्रकाशे पर्यवस्यति तत्सर्वमन्य- थानुपपत्तिरेव स्वप्रकाशप्रसाधकतया प्रदर्शिता स्वीकारयति । तद्यथा अन्यो ज्ञाता अन्यश्च ज्ञेय इत्यन्यत्र दृष्टमहमिति व्यवहारान्यथानुप- पत्त्या त्याज्यं तथा अन्यज्ज्ञानमन्यज्ज्ञेयमिति जानामीति व्यवहारान्यथा नुपपत्त्या त्याज्यं सर्वतोबलवती ह्यन्यथानुपपत्तिः तथा दृष्टतामात्रमव लम्ब्य प्रवृत्तं तर्कशतमपि बाधते तदिदमाहुः । "प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि अदृष्टशतभागोपि न कल्प्यो निष्प्रमाणकइति ।,, तस्मात् "अन्यथानुपपत्तिश्चेदस्ति वस्तुप्रसाधिका । पिनष्टि दृष्टवैमत्यं सैव सर्वबलाधिका । वाच्यान्यथोपपत्तिर्वा त्याज्यो वा दृष्टताग्रहः नह्ये कत्र समावेशश्छायातपवदेतयोरिति ।,, तदित्थं त्वदङ्गीकृतसद्विचार लक्षणोपपन्नैरेवं विधैर्विचारैः स्वप्रकाशता भवता सुप्रतिपद्या । अस्मा- भिस्तु स्वसंवेदनबलादेव स्वतःसिद्धिरूपं विज्ञानमाश्रियतइति एवञ्च सति सौगतब्रह्मवादिनोरयं विशेषो यदादिमः सर्वमेवानिर्वचनीयं वर्णयति । यदुक्तं भगवता लङ्कावतारे "बुद्ध्या विविच्यमानानां स्व भावो नावधार्यते । अतोनिरभिलाप्यास्ते निःस्वभावाश्च देशिता इति ।,, ज्ञानव्यतिरिक्तं पुनरिदं विश्वं सदसत्त्वाभ्यामनिर्वचनीयं ब्रह्मवादिनः सङ्गिरन्ते । तथा हि नेदं सद्भवितुमर्हतीति वक्ष्यमाणदूषणग्रस्तत्वात् नाप्यसदेव तथा सति लौकिकविचारकाणां सर्वव्यवहारव्याहत्यापत्तेः । यदपि निर्वक्तुमसामर्थ्यं गुरवउपास्यन्तां येभ्यो निरुक्तयः शिक्ष्यन्त- इत्युपालम्भवचनं तत्तदा शोभेत यदि मेयस्वभावानुगामिनीयमनिर्वच-

नीयतेति नब्रूयुर्वक्तृदोषादिति च वदेयुः । यस्तु यस्तु वादी निरवताभिमानं धत्ते स निर्व्वक्तु नतु ग्रस्यति वक्तव्यदोषात् । नच ते दोषाः स्वोक्तिमपि घ्नन्तो जातयः कथं न स्युरिति वाच्यं यतोऽनिर्व्वचनीयत्वं बाध्यते तैर्दोषैः स्वयमप्यनिर्व्वचनीयैरेव अनिर्व्वचनीयैरपि च तैर्व्यवच्छियत एवेति कुतोऽस्मान् प्रति व्याघातः स्यात् तज्जातीयत्वस्य च निरुच्य योजयितुमशक्यत्वात् । ननु सदसत्त्वपक्षयोर्दोषदर्शनादनिर्व्वचनीयतेति ब्रुवाणस्य किं सदसत्त्वसंशयः किम्वा सदसत्त्वपक्षवहिर्भावाभ्युपगमः । आद्ये भवितव्यं सदसत्त्वयोरन्यतरेणेत्येकस्याभासत्वं तच्च सत्त्वपक्षदोषस्यैवाभ्युपेयभावावश्यकत्वात् यदि तावत् सत्त्वं तत्तदा सत्त्वपक्षे दोषः कथं सङ्गच्छते अथासत्त्वपक्षस्तदा सर्व्वासत्त्वे तद्दोषः कथं सद्भावमनुभवितुं प्रभवेत द्वितीयस्तु व्याघातादेवासम्भवी परस्परविरोधे हि न प्रकारान्तरस्थितिरिति तदेतदनाकलितपराभिसन्धेः प्रत्यवस्थानम् । योहि सर्वमनिर्वचनीय सदसत्त्वं ब्रूते स कथमनिर्वचनीयत्वासत्वव्यवस्थित्यै पर्य्यनुयुज्यते सापि हि कृत्स्नप्रपञ्चपरसर्वशब्दाभिधेयमध्यनिविष्टैव परस्यैव तु व्यवस्थयैवं पर्य्यवस्यति निर्वचनप्रतिक्षेपादनिर्वचनीयत्वं विधिनिषेधयोरेकतरनिरासस्येतरपर्य्यवसायितायास्तेनाभ्युपेयत्वात् ततः परकीयरीत्येदमुच्यते अनिर्वचनीयत्वं विश्वस्य पर्य्यवस्यतीति । वस्तुतस्तु वयं प्रपञ्चसत्त्वासत्त्वव्यवस्थापनविनिवृत्ताः स्वतःसिद्धे चिदात्मनि ब्रह्मतत्त्वे केवले भरमवलम्ब्य चरितार्थाः सुखमास्महे ये तु स्वपरिकल्पितसाधनदूषणव्यवस्थया विचारमवतार्य्य तत्वं निर्णेतुमिच्छन्ति तान् प्रति ब्रूमो न साध्वीयम्भवतां विचारव्यवस्था भवत्कल्पितव्यवस्थयैव व्याहतत्वात् अतएवास्मदुपन्यस्यमानदूषणस्थितिविषयाः पर्य्यनुयोगा निरवकाशाः त्वद्व्यवस्थाया एव व्याहत्युपन्यासात् नचोपन्यास एव निर्बन्धकरणं विचारोपन्यासस्य सदसत्त्वोपगमोदासीनैर्विचार्य्यमित्यभ्युपेत्यैव परं विचारप्रवर्त्तनायाः शक्यत्वमित्यावेदितत्वात् ।

यदि तु विचारस्य सत्त्वमनभ्युपेत्य न विचारयितुं शक्यमित्युच्यते तदा प्रमाणमप्यापार्थ्य न तदीयसत्त्वाभ्युपगमोऽपि शक्यते अतिप्रसङ्गादिति विचारस्यापि विचार्य्यत्वेऽनवस्थया विचारारम्भ एवाशक्यः स्यात्। नच पूर्वपूर्वसिद्धत्वाद्विचारे विचारान्तरमिदानीं गवेषणीयमिति वाच्यम् विचारस्य पूर्वसिद्धत्वे विचार्य्यस्यपक्षविषयव्यवस्थितत्वात् तस्य विचार्य्यमपि पूर्वपूर्वमेव विचारितमित्यनारम्भ एव विचारस्य अथ विचार्य्यविशेषस्य पूर्वमसिद्धत्वात्तदर्थं विचारारम्भ स्तर्हि विचारविशेषस्यापि तद्विषयकस्य पूर्वमसिद्धिरेवेति वृथाऽस्मत्कचर्वणं यदि च तद्दर्शनरीत्याभिधीयमान मस्माभिर्बाधं विधत्से तदाऽस्वाभ्युपगमरीतिबाधविधायितैव ते स्यात् अस्माभिर्निर्वाह्यमाणस्य त्वया खण्डनयुक्त्यैव बाधे अस्माकमेव जयता खण्डनयुक्तयो बाधिका निर्वाह्यपक्षस्य बाध्यइत्यस्मदुक्तस्य पक्षस्य त्वयैव निर्वाहात् तस्मात् त्वया निर्वाह्यमप्यस्माभिस्तु खण्डनीयमितीदृश्यामेव परं कथायां त्वन्निर्वाह्यनिर्वाहे तव जयो नान्यथेति तदेवं भेदप्रपञ्चोऽनिर्वचनीयः ब्रह्मैव तु परं परमार्थसदद्वयमितिस्थितम्।

नचाद्वैते किं प्रमाणं प्रश्नएव तावदयमद्वैतमनङ्गीकुर्वतो नोपपद्यते प्रमाणं यन्नाम द्वैते पृच्छ्यते तस्याप्रतीतौ कथमेवम्भूतः प्रश्नः सङ्गच्छते न हि प्रमाणमात्रं भवता पृच्छ्यते किन्नाम विषयविशेषनियतं तच्च तदैवोपपद्यते यदि तादृशं ते प्रतीतिमारोहेत प्रश्नस्य वाग्व्यवहारविशेषत्वात् व्यवहारस्य च स्वजनकज्ञानविषयनियतत्वात् अन्यथा व्यवहाराणां विषयनियमप्रयोजकस्यान्यस्यासम्भवेन व्यवहारविषयपारिप्लवत्वापत्तेः। यदि चाद्वैतं प्रश्नविषयः प्रतीतमुच्यते तदा तत्प्रतीतिस्ते प्रमा स्यादप्रमा वा। आद्ये यदेव तस्याः प्रमायाः करणं तदेवाद्वैते प्रमाणं तवापि सम्प्रतिपन्नमिति वृथा तव प्रश्नः। नच वाच्यं सामान्येनाद्वैतप्रमाणसिद्धौ भूतायामपि विशेषतः प्रमाणे प्रश्नः यतः सामान्यसिद्धावेवाद्वैतसिद्धौ

विशेषाय विचारः काकदन्तविचारवत् स्यात् सामान्यसिद्धिरेव विशेषमाक्षिप्यानयन्ती विशेषमपि ते कथितवतीति किमनेन प्रश्नेन परिगणितेषु हि प्रमाणप्रकारेषु सर्वेषु मध्ये यत्रैव दोषं न प्रमिणोषि तत्रैव विश्रमे सामान्यस्य विश्रान्तेः। यदि च परिमितप्रकारेषु प्रमाणप्रकारेषु सर्व्वेष्वेव दोषं प्रमिणोषि तदा प्रकारान्तरमाक्षिप्यापि सामान्येन विश्रमणीयमेव यदि च का प्रमाणव्यक्तिरसाविति प्रश्नार्थः परिशिष्यते तदा सर्व्वा व्यक्ति विशेषतोण निर्द्दष्टुं शक्यत इति तदनिर्द्देशेऽपि न नः किञ्चिदपचीयते। यदि च द्वितीयस्तदानीमद्वैतप्रतीतिमप्रमामन्यमानस्य तव अप्रमाविषये किं प्रमाणमिति कथं न प्रश्नो व्याहन्यते। अथ अप्रमा सा मम मते तव तु मते प्रमैवेति तत्करणं प्रमाणं पृच्छ्यसइति ब्रूषे नैतदभ्युपपद्यते तवाद्वैते यत् ज्ञानमुत्पद्यते तत्करणं मया प्रमाणरूपं वक्तव्यमित्यत्र ममानियमात्। यदि नाम मया अद्वैतमभ्युपेयते तावता किन्तावकीनस्य तज्ज्ञानस्य करणमवश्यं प्रमाणं स्यात् वस्तुतो वह्निमत्यपि पर्व्वते यदि कश्चिद्वाष्पं धूमं प्रतीत्य ततोवह्निमनुमिनोति तावता किं वाष्पविषयं धूमज्ञानं तत्करणं प्रमाणमेष्टव्यमिति। अस्तु वा प्रश्नोऽयं यथा तथा श्रुतिरद्वैते प्रमाणमिति ब्रूमः श्रूयते खल्वेकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चनेत्यादि श्रुतिप्रामाण्यं सिद्धार्थप्रामाण्यञ्चेश्वराभिसन्धौ प्रसाधयिष्यते सिद्धार्थानां श्रुतीनामन्यपरत्वमपि यदि स्यात् तथापि पदसमन्वयबलेन तासप्रतीयमानमर्थमबाधितमादायैव तासामनन्यपरीभवनात्। धियः स्वतः प्रामाण्यस्य बाधकैकापोद्यत्वात्। ननु नाद्वैतश्रुतीनामुक्तार्थे प्रामाण्यं भवति प्रत्यक्षादिबाधात् तत्तस्मान्यत्रैव क्वचित्तात्पर्य्यं कल्प्यम्। मैवम्। यदद्वैतश्रुतेर्बाधकं प्रत्यक्षादि मन्यसे तदात्मीये विषये घटपटादेर्भेदे नियत एवोत्पद्येत ननु प्रत्यक्षादिकं भूतभाविवर्त्तमानसकलवस्तुभेदग्राहि जायमान-

मावयोः सम्प्रतिपन्नमस्ति तादृशेन च ज्ञानेनोत्पद्यमानेन सार्व्वज्ञं तदा तव श्रद्दध्याम् यदि जानासि मम चेतसि किं वर्त्ततइति। यदि च प्रत्यक्षादि किञ्चिन्मात्रविषयं तदा तद्विषयादन्यत्रापि प्रवर्त्तमाना नाद्वैतश्रुतिस्तेन बाधितुं शक्यते स्वविषयमात्रे प्रमया विपरीतविषयज्ञानबाधनात् अन्यथातिप्रसङ्गात्। माभूदग्नीषो-मीयपश्वालम्भनविधिना सर्व्वभूताहिंसाश्रुतेर्न्नैरर्थ्यं यदा चैवं तदा बाधिकाया धियो बाध्याया स्वाद्वैतबोधने श्रुतिर्निराबाधा सती तयोरैक्यं बोधयतीति प्रत्यक्षादि कथं स्वात्मानमेव बाधेत घटेन पटेन तद्भेदेन च स्वविषयेण सह तस्याएव धियः श्रुत्या सर्वस्या-द्वैतं गोचरयन्त्या कथं नाभेदे प्रामाण्यमासादयितव्यं तत्राबाध्यमान त्वात् नहि तस्याधियः स्वात्मा वा स्वात्मना वा सह घटपटादेर्भेदोपि विषयः घटपटौ भिन्नावित्येवमाकाराहि सा जायते नत्वहं घटात् पटाच्च भिन्नः मत्तो वा तौ भिन्नाविति। स्वप्रकाशतापि स्वमात्रे साक्षिणी नतु यतो यतः प्रकाशोभिद्यते ततस्ततस्तस्य भेदेऽपि अन्यथा तत्तदपि प्रकाशकुक्षौ निक्षिपन्ती न कथमद्वैतएव पर्य्यव-स्यति। नच तया धिया स्वस्य स्वविषयस्य च स्वरूपावगाहने स्वरूप लक्षणो भेदः प्रकाशितएव स्यादिति वाच्यं पुरोवर्त्ति रजतमिति भ्रान्तौ पुरोवर्त्त्यात्मनो रजतात्मनश्च स्वरूपप्रकाशे भेदग्रहापत्तेः धर्म्मविशेषमन्तर्भाव्य स्वरूपस्य भेदत्वे धियोपि तथा स्यादिति सैव धीर्न तत्प्रकाशः तस्मिन् सन्निकर्षाद्यपेक्षायां धियः प्राक्तदसम्भवात्। आत्मवदात्मधर्म्मेपि सन्निकर्षानपेक्षा सेति चेन्न ग्रहणत्वस्मृतित्वप्रमा-त्वादावपि तथैव स्यादिति तदेवं सा बुद्धिः श्रुत्या घटपटात्मतया व्यव-स्थाप्यमाना कथमात्मनः स्वस्मादेव भेदे प्रमाणीभवितुं प्रभवतीति बाधिकायां बुद्धौ घटपटयोर्भेदप्रमात्वाभावावगमादगत्या श्रुतिस्तत्र तत्राप्रतिद्वन्द्वितया असङ्कुचितस्वतःप्रामाण्यबललब्धतत्तदर्थकान्य-थानुपपत्तिसहायसम्पदजेया तयोरप्यभेदं बोधयन्ती न प्रतिहन्तुं

शक्येति न क्वचिदपि प्रतिहतप्रसरा सती सर्व्वाद्वैतप्रमापिकेति। भेदप्रमान्यथानुपपत्त्या च वैपरीत्यमशक्यम्। तत्राद्वैतश्रुत्या सन्दिह्यमानस्य प्रमात्वस्यैवासिद्धेः भेदधीमात्रस्य च द्विचन्द्रादिज्ञानवदन्यथाप्युपपत्तेः एकमित्युपादाय यदेवकारमप्युपादत्ते श्रुतिरेकमेवेदमिति तया तदैकान्तिकमैक्यं बोधयतीति भेदाभेदेनाप्यशक्यसमर्थनं घट पटादिभेदग्राहि प्रत्यक्षादिप्रामाण्यमिति बुद्धेर्व्विरम्य व्यापाराभावात् कथमित्थमिति चेन्न श्रुतितोऽग्रागेव जातायाः सर्व्वविषया या अद्वैतधियोऽस्मद्धृदयएवंविधविचारसोपानपरम्परामारोहन्त्यो नानाविषयेषु तत्प्रामाण्यविषयाः क्रमेण परिनितिष्ठन्तीत्युच्यमानत्वात्। ननु यदि नाम प्रत्यक्षव्यक्त्या तया घटपटभेदोल्लेखिन्या स्वात्मना सह घटपटयोर्भेदो न गोचरीक्रियते तावतैव कथं तस्याः स्वविषयेन सहाद्वैते श्रुतिः प्रामाण्यमासादयितुमीष्टे बुद्ध्यन्तरेण तया सार्द्धं घटपटयोरपि भेदमुल्लिखता तत्राद्वैतश्रुतेर्बाधादेव। मैवं तर्हि तस्या अपि विषयमापाततः परित्यज्य ययैवा परया बुद्ध्या घट पटभेदबुद्धेर्घटात्पटाच्च भेदो विषयीक्रियते तस्याः स्वविषयेण सह भेदेऽद्वैतश्रुतिः प्रामाण्यमवलम्ब्य तदापदा घटपटतद्भेदबुद्धिभिः सह द्वितीयाया बुद्धेरभेदे पर्य्यवस्यन्ती सर्वेषामेव तेषामभेदे विश्राम्यति। एवञ्च सति यत्रैव गत्वा बाधबुद्धिपरम्पराविच्छेदो विषयान्तरसञ्चारोच्छेदभयादनवस्थाभयाच्चाभ्युपेयः तस्यामेव बुद्धौ पदमारोप्याद्वैत श्रुतिः सर्व्वं तत्तद्विषयविषयिप्रवाहमद्वैते स्थापयन्ती न केनापि प्रमाणेन क्वचिदपि बाधितुं शक्या तस्मात् "सुदूरधावनश्रान्ता बाधबुद्धिपरम्परा। निवृत्तावद्वयाम्नायैः पार्ष्णिग्राहैर्विजीयते।" नच यत्र तस्य प्रतिपत्तुर्बुद्धिधाराविश्रान्तिस्तत्र पुरुषान्तरबुद्धिभेदे प्रमाणं स्यात् तथापि पुरुषान्तरेण भिन्नतया प्रमीयते सेत्यत्र प्रमाणं त्वया वाच्यं नहि तदपि पुरुषान्तरेणैव नच सम्भाव्यमेवं श्रोतेन निश्चयेन तन्निवर्त्तनात्तथाप्यनवस्थानादिति।' अथ ब्रूषे यदा कियद्दूरं

बुद्धिपरम्परया सा बाधिता भवत्यद्वैतश्रुति स्तदा तन्न्यायाद् यापि बुद्धिः शेषं गत्वा नानुव्यवसास्यते तथापि तद्बाधागम्यते यत्र सा बाध्यते तत्तुल्यन्यायत्वादन्तिमबुद्धेरपीति। मैवम्। किञ्चियतीषु बुद्धिषु व्याप्यव्यापककोटिमवलम्ब्य व्याप्तिग्रहरूपयैव धिया शेषबुद्धौ बाधनं व्युत्पादयसि त्वमद्वैतश्रुतेः किम्वा बुद्ध्यन्तरदृष्टव्याप्तिसनाथया पक्ष धर्म्मे हेतुमुल्लिखन्त्या बुद्ध्यान्तिमबुद्धिविषयया। नाद्यः। व्याप्तिबुद्धि र्यदि विशेषेपि स्वातन्त्र्येण बाधात्मिकोपेयते तदा सैव विशेषबुद्धिरपि स्यादिति गतमनुमानकथया। अथैवमनुमितिमभ्युपैषितदा सा ना-त्मानमपि पक्षीकृत्य प्रवर्त्ततइति तत्रैव दत्तपदा सर्व्वामद्वैतश्रुतिपर-म्परामालम्बतइत्युक्तमावर्त्तते। अथ सर्वा विवादाध्यासिता बुद्धयः स्व विषयेभ्योभिन्ना बुद्धित्वात् घटपटबुद्धिवदिति सामान्याकारेणात्मान-मपि धर्म्मीकृत्यात्मनोपि स्वविषयाद्भेदं साधयिष्यत्यनुमेति मन्यसे.। मैवम्। एवमपि विषयिणो विषयस्याभेदं बोधयन्ती श्रुतिरनुमानमप्य नवकाशयति। विषयिस्वविषययोर्म्मिथोभेदेऽपि साध्ये अस्तु हेत्वनु-योगः परबुद्धीस्तद्विषयांश्च प्रति निराबाधा सती श्रुतिरेकस्याबुद्धे र्विषयादपरामपरस्याश्च परामभेदबोधाय धावन्ती सर्व्वाद्वैतएव पर्य्य वस्यतीति। नच शक्यमनुमातुं सर्व्वस्याबुद्धे र्विषयात् सर्व्वा बुद्धि-र्भिन्नेति माभूदन्यबुद्धिविषयादात्मनोपि बुद्धिर्भिन्नेति नचात्मव्यतिरि-क्तादित्युक्तेऽपि निस्तारः स्यात् अद्वैतवादिनः सर्व्वाभेदमिच्छतः क्वचि-दपि तदसिद्ध्या विशेषणाप्रसिद्धेरिति एतेन सर्व्वं भिन्नमिति वाक्येन विना बाधं स्वतःप्रमाणेन सप्रतिपक्षा सेयमद्वैतश्रुतिरित्यप्यनवकाशं प्रत्यवस्थानं मन्तव्यम्। यस्मात् कस्मादपि भेदे मिथ्यातः सत्यभेदोप-गमेन सिद्धसाधनात् सर्व्वस्मादिति स्वस्मादप्यापत्तेः। स्वव्यतिरिक्ता-दिति चाद्वैतवादिन्यव्यवच्छेदकं तदेवं "हेत्वाद्यभावसार्व्वत्रे सर्वं पक्ष तया स्थितं। किञ्चित्तु त्यजता दत्ता सैव द्वारद्वयश्रुतेः।,, अतएव च "आद्यधीवेद्यभेदीयाप्यन्यथानुपपन्नता।' स्वज्ञानापेक्षणादन्ते बाधते

नाद्वयश्रुतिः ।” नच संस्काराद्दृढ़दृढ़ान्वयव्यतिरेकान्वयव्यतिरेकोऽद्वयप्रतिपत्त्युत्पत्तिप्रतिबन्धः शक्यशङ्कः अतः “अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि । अबाधात्तु प्रमामत्र स्वतःप्रामाण्यनिश्चलाम् । असंसर्गाग्रहस्यापि मता शंसत्यबाधिते । अत्यन्तासदसंसर्गाग्रहं संसर्गभ्रमकम् । अनौचित्या हि तर्कस्य दुर्बाधैवाद्वयश्रुतिः । अनारोपितमूलत्वाद्बलाद्यं पुरतादृशा । प्रवृत्तेनाप्यनौचित्यमूलं येन न लूयते तन्नानौचित्यसामान्यं वैपरीत्यात्तु नात्र तत् ।” ननु यद्यद्वेदादाद्रियते त्वया नेतरतोऽस्य भेदो गृहीतइति ततोऽस्याद्वैताम्नायैरभेदबोधनेन तद्द्वारा सर्वाभेदे पर्य्यवसातव्यमिति । ततस्ततस्तस्य भेदस्तथैव गृह्यते मया तस्मादुदाह्रियमाणतायामनुदाह्रियमाणतायान्न कस्यचिदेतत् प्रत्यवस्थानमस्थानेइति । नैवम् । अन्तिमबुद्धेरद्वैतश्रुतिजबुद्ध्यादितोभेदो न त्वया प्रमित इति मयोच्यमाने यस्तदीयस्ततोभेदस्त्वया प्रमातव्यः स न तावत् प्रत्यक्षेण तत्कालमन्तिमबुद्धेरनुपस्थितेः । यदि च केनचिद्धेतुना वा कयाचिदनुपपत्त्या वा तथा स्यात्तदानीमद्वैतवादिनं प्रति हेतोः साध्याद्यविशिष्टतयानुपपत्तेः येन विना सा तदविशिष्टतया न ततः कथमाभासात्प्रमोदयः स्यात् । नच वाच्यं स्वयं मया स भेदो ज्ञेयइति नास्ति पाक्षिकोपि मां प्रत्यसिद्ध्यादिरिति । यतोस्य त्वद्वचनस्य वैयर्थ्यापत्तिः स्यात् वचनस्य परार्थत्वात् मौनमवलम्ब्यावतिष्ठमानस्य भवानप्रतिभातो न मुच्यते । नच स्वयं मया प्रमितोभेदः परं प्रति वचसा केवलं बोध्यतइति वाच्यं त्वद्वचसि परस्याप्रत्ययात् । विजिगीषुं परं प्रति विजिगीष्वन्तरवचनं हि तत्रार्थे तज्जिज्ञासोत्पादनद्वारेण स्वतस्तस्य तदर्थप्रमित्युत्पादनपर्य्यवसायितयोपयुक्तम् । नचाद्वैतवादिनं प्रति तथा कर्त्तुं शक्यते तं प्रत्यन्यथासिद्धेरुक्तत्वात् । नच वाच्यं मम वचनात् सन्देहेनापि श्रुत्या तत्र तत्र सन्दिग्धबाधितभावया नाभेदप्रतिपादनं ते घटतइति यस्मादद्वैतं मन्यमानेन भेदासिद्ध्या सर्व्वेषु साध्याविशेषादिदोष

प्रतिसन्धायिना संशयस्याप्यनवकाशीकरणमेव स्यात् तस्मात् "एकां शाखामादायनान्यं गमयतः क्वचित्। आस्ते न धीरवीरस्य भङ्गः सङ्करकेलिषु।" अपि च प्रतीयते तावदिदं सामान्यतोयन्नाम किञ्चिन्नरश्चेतसा चिन्तयन्नस्तीति किञ्चिद्वा विवक्षुरित्यादि तत्र परस्य बुद्धिविषयो विवक्षादिविषयो वा योविशेषतोविनिगमनं विनैव न प्रतीयते ततोऽन्तिमबुद्ध्यादिभेदो न भवता शक्यप्रमः परेण तच्चिन्तनादेरपि सम्भवात् स्वस्मात्तस्य भेदाभावात् ततस्तत्र लब्ध पदा कथमद्वैतश्रुतिर्व्विश्वाभेदे पर्य्यवस्यन्तीत्वया शक्यबाधा स्यात्। तस्मात् "नैव सामान्यतोज्ञाते नैव ज्ञाते विशेषतः। यद्बोधस्त्वया कर्त्तुं शक्यः स्याददयश्रुतेः।" ननु भेदमनङ्गीकुर्व्वतो भवतः कथं तत्तत्पदपदार्थवैचित्री व्यवहारो न व्याहन्यते कथं व्याहन्यते प्रति वक्ष्यते हि तत्। किञ्च योऽयं त्वया व्याघात आपादनीयः सोऽपि कस्माच्चिदापादकात्। नचापाद्यापादकमभिद्यमानमापत्त्यै प्रभवेदिति। तस्मात् "नानात्वमवलम्ब्यापि वदत्यद्वैतवादिनि। असिद्धभेदाद्व्याघातः यतेदापादकात् कुतः।

इदमपि विचारमर्हति यदद्वैतश्रुतीनां बाधकमुपन्यस्यते प्रत्यक्षादि घटपटप्रभृतिभेदग्राहि तदपि कीदृशार्थे पर्य्यवस्यतु। तथाहि प्रत्यक्षेण योऽसौ भेदो गृह्यते स किं स्वरूपभेदः किमन्योन्याभावः किं वैधर्म्म्यम् अन्यदेव वा। यदि तावत्स्वरूपभेदः स नाम घटपटयो र्हि स्वरूपं यत्परस्परस्माद्भेद स्तत्परस्परमनन्तर्भाव्य न सम्भवति भेदोहि भवन् कस्मादपि भवति। अन्यथा स्वरूपं भेदइति पारिभाषिकं नाम स्यात्। यदा च घटाद्भेदः पटस्येत्येतावानेवार्थः पटादेः स्वरूपं प्रत्यक्षेण गृह्यते तदा घटोऽपि पटात्मन्येव प्रविष्ट इति घटपटयोरैकात्म्यमेव भेदग्राहिणा प्रत्यक्षेणावगाहितमिति विपरीतमापद्यते। ननु यथेयं प्रतीतिरभेदोल्लेखितया व्याख्यायते तथा भेदोल्लेखेपि दीयतामस्यां दृष्टिरभेदे हि घटइत्येव पटइत्येव वा बुद्धिः स्यात

ननु घटाद्भिन्नः पटइति चेत् स्यादप्येष पर्य्यनुयोगः यद्यविद्यमान भावभेदं पारमार्थिकमभेदमिच्छन्तोपि प्रत्यादिशामः । तस्मात् "अभेदेनोल्लिखन्ती धीर्न भेदोल्लेखनक्षमा । तथाचाद्ये प्रमा सा स्यान्नान्त्ये सापेक्षवैशसात् ।" अथ भेदइत्येतावन्मात्रं पटस्य स्वरूपं घटादिति तद्घटेन प्रतियोगिनान्येनैव निरूप्यते तदपि नोपपद्यते निष्प्रतियोगिकस्य भेदस्य प्रमाणागोचरत्वात् नित्यं प्रतियोगिघटित एव तस्मिन् प्रमाणप्रसरात् । का चेयं वाचोयुक्तिः यदन्यासाकाङ्क्षं पटस्य स्वरूपमन्येन निरूप्यमाणं ततोभेदोभवतीति । न हि यत् स्वरूपेणैव नीलं तत्पीतेन निरूप्यमाणं सत् नीलं भवतीति यदपि चोक्तं प्रतियोगिना घटेन निरूप्यमाणं पटस्य स्वरूपं भेद इति तत्रापि पटं प्रति प्रतियोगित्वं घटस्य किं स्वरूपं किं वा धर्म्मः कश्चित् यदि प्रथमस्तदा पटं प्रति प्रतियोगित्वमित्येतावानेवार्थोघटस्य स्वरूपं भवदात्मन्येव पटमपि प्रक्षिपतीति कथं नाद्वैतमेव पर्य्यवस्यति तत्रापि यदि प्रतियोगित्वमात्रं घटस्यात्मा पटं प्रतीति च घटापेक्षित्वमन्यदेव तदप्यनुपपन्नम् अकिञ्चिदपेक्षस्य प्रतियोगित्वस्य प्रमाणाविषयत्वात् पटं प्रतीत्यत्रापि च स्वरूपतदन्यविकल्पे दोषएव । नापि द्वितीयः योसौ धर्म्मः पटं प्रति प्रतियोगित्वं तस्यात्मनि पटोपि प्रविशतीति तेन सह पटस्याद्वैतं स्यात् यदा च पटो घटस्य धर्म्मतामापन्न स्तदा घटोपि पटधर्म्मतामनेनैव न्यायेन गच्छेत् नहि पटेन प्रतियोगिना निरूप्यमाणत्वे घटस्यान्या गतिरस्तीति परस्परमाश्रितत्वमाश्रयत्वञ्च स्यात् । नच कस्यचित्प्रमाणस्य विषयो घटारूढः पटस्तत्पटारूढश्च सएव घट इति । किञ्च धर्म्मस्य तस्य धर्म्मिणा सममसम्बन्धेऽतिप्रसङ्गः । सम्बन्धानन्त्येऽनवस्था प्रथममन्ततो वा गत्वा स्वभावसम्बन्धोपगमे सम्बन्ध्यन्तरस्यापि तत्स्वभावप्रवेशादभेदएव पर्य्यवसानं स्यादिति एवमन्यस्मिन्नपि धर्म्मविकल्प इति तस्मात्स्वरूपभेदे प्रमाणीभवत् प्रत्यक्षमद्वैतएव प्रमाणम्भवति । ननु घटादिकमेव यदान्यानपेक्षं

वीक्ष्यते तदा घटादिकमित्येव प्रतीयते यदा पुनः पटादिना निरू-
प्यते तदा ततोभेदइति प्रतीयते । नैवम् । घटादिकमित्येवम्भूतप्रतीते
स्तावच्छेदप्रतीतिर्विलक्षणा सा च न घटादिमात्रेण विषयेणान्याकारा
भवितु मर्हति तेन पटादिकमधिकं तदा प्रकाशत इति विशेषः
स्यात् घटपटविषयप्रतीतितोपि वैलक्षण्यात् । नहि घटः पटश्चेति
घटात्पटोभिन्न इति प्रतीत्योरेकार्थत्वं कश्चित्प्रत्येति तत्कस्य हेतोः
पञ्चम्या प्रथमया च वैकल्पिकनिर्देशमसहमानयैव प्रतीतिकलह
निरासात् नहि घटः पटश्चेति प्रत्येतव्ये कश्चिद्घटात्पट इति प्रत्येति
तस्मात् घटस्य न स्वरूपनिरूपणे पटप्रतीत्यपेक्षा । नच यत्प्रतीतिर्य
त्प्रतीतेः कारणं स्यात् तत्र तस्याः कारणभूतायाः प्रतीतेर्योऽर्थस्तस्मा-
दयमिति कृत्वा कार्य्यभूतायाः प्रतीतेरर्थः प्रतीयते माभून्निर्विकल्पा-
र्थादेव सविकल्पकार्थस्य प्रतीतिः सा च सादृश्यादेरेवं स्मर्य्यमाणादिः
स्यात् तस्मात्पटोघटाद्भिन्नइत्याद्याकारेण पटादेर्भेद एव भेदावधिभूत
घटादिसङ्घटितः स्फुटं सर्वलोकसाक्षिकः प्रतीयमानो नैकप्रतीतेरन्य
प्रतीत्यपेक्षामात्रेण समर्थयितुं शक्यः अतिप्रसङ्गादिति । अतएवा-
न्योन्याभावभेदमवगाहमानं प्रत्यक्षमद्वैतश्रुतिबाधकमित्यपि निर-
स्तम् अन्योन्याभावोपि हि यस्माद्भेदएष्टव्य स्तमात्मन्येवान्तर्भावयेदुक्ता
युक्तिभिः । किञ्च घटपटयोस्तत्तदन्ययोश्च तादात्म्यमन्योन्याभावस्य
प्रतियोगि मन्तव्यं तद्यदि सर्वथा नेष्यते तदा तद्विशिष्ट स्तदुपलक्षितो
वान्योन्याभावोपि न प्रमाणेन प्रत्येतुं शक्यः । नहि शशविषाणवि-
शिष्टस्तदुपलक्षितो वा कश्चित्प्रामाणिको भवितुमर्हति तत्कस्य हेतोः
तस्मिन्निर्विशिष्टरूपेऽर्थे तादृशि चोपलक्षणाव्यवच्छिद्यमानात्मनि प्रमाणं
निविशमानं विशेषणमपि तदीयं तदुपलक्षणमपि वा नानुल्लिखद्ग-
वितुं प्रभवति तस्मिंश्चात्यन्तमसत्येवालम्बने न तत्प्रामाण्यं शक्य-
समर्थनम् । नच वाच्यं पटप्रतियोगिको घटमाश्रितोऽसावभावो
ऽभ्युपगम्यमान एकोघटप्रतियोगिकः पटमाश्रितश्चापरोनात्यन्ता-

सत्प्रतियोगितादोषमारोप्स्यतीति। तथा सति संसर्गाभावादन्योन्याभावस्य कोविशेषः स्यात् तर्हि यथा घटाभावस्य पटसंसर्गवति घटसंसर्गाभावं पटे समर्थयसे तथा घटाभावः पटात्मकइति तत्तादात्म्याभावं पटस्य स्वीकरिष्यसि तस्मात्तादात्म्यं संसर्गश्च प्रतियोगिकोटावन्तर्भाव्यान्योन्याभाव संसर्गाभावयोर्वैलक्षण्यमुपेयं तथा सति चात्यन्तासत्प्रतियोगिता दुर्वारा। न च वाच्यं घटे पटत्वं नास्ति पटे च घटत्वं नास्तीत्येतावन्मात्रपर्य्यवसितैवान्योन्याभावव्यवस्था मन्तव्येति यतस्तथा सति घटे पटत्वे च न कश्चित्तादृशोधर्म्मोऽभ्युपगम्यते योऽन्योन्यस्मिन्निषेद्धुं योग्यइति तयोस्तादात्म्यापत्तौ सत्यां घटे पटत्वं पटे च घटत्वं निषेधत्प्रमाणं घटत्वपटत्वशून्यद्वयमप्यावेदयतीति वैधर्म्म्यस्य स्वरूपभेदस्य चासम्भवेन किं प्रतियोगि किंवा लम्बनं विधाय घटपटान्योन्याभावोपि प्रमाणपथमवतरेदिति अतएव न वैधर्म्म्यमपि भेदमावेदयत्प्रत्यक्षमद्वैतबाधकमुपपद्यते वैधर्म्म्यं हि घटत्वपटत्वादौ वैधर्म्म्यमन्यदस्तीत्युपगमे वैधर्म्म्यविश्रान्त्यनवस्थयोरैक्यमननुभवस्य कथं प्रत्युत्तरणीयः। वैधर्म्म्ये च वैधर्म्म्यास्वीकारे वैधर्म्मयोरैक्यापत्त्या कथमात्माश्रयभेदत्वेन तयोः पर्य्यवसानं स्यात्। किञ्च ये ते वैधर्म्म्यभेदा ते किं घटादितोभिन्ने धर्म्मिणि निविशते किमभिन्ने परस्परविरुद्धयोरनयोः पृथग्भूतस्य प्रकारस्यासम्भवात्। आद्ये येन भेदेन भिन्नत्वं वैधर्म्म्याश्रययोर्मन्तव्यं तत्रापि पर्य्यनुयोग इत्यनवस्थायां पर्य्यवसानं स्यात्। सन्त्वनन्ताएव भेदाइति चेन्न क्रमेण तेषामाश्रयसम्बन्धे सावधित्वे वस्तुनि तदन्वयासङ्गतिरेव। अथ जायमानं वस्तु युगपदेव ते भेदाः परिरभन्ते तदा किम्भेदविशेषिते किम्भेदस्थितिरितिविनिगमकविशेषाभावादन्योन्यकलहं तेषां कः समाधातुमीष्टे। चरमचरमस्वीकार्य्येण च भेदेन प्रथमप्रथमस्वीकृतभेदोपयोगसिद्धेरग्रे धावन् पश्चाल्लुप्यमानो विस्मरण-

श्रीत्वश्रुतवत्स भेदप्रवाहः किमालम्बेत। एवमेवंविधे विषयेऽन्यत्रापि "प्रास्तोपाविनिगम्यत्वप्रमाणापगमैर्भवेत्। अनवस्थितिमास्थातुरचिकित्स्या चिदोषतेति।" यदि च क्वचिद्भूत्वा स्वरूपमेवान्योन्यं व्यावर्त्तमानं भेद इष्यते तदा ययोः स्वरूपं तयैक्यं तयोर्निःस्वरूपतापत्तिः। अथ न स्वरूपमात्रं मिथो व्यावर्त्तते किन्नाम स्वरूपविशेष इत्युच्यते तर्हि स्वरूपविशेषमात्रव्यावृत्त्या स्वरूपमात्रं तयोः स्यादित्येकत्वापत्तिः। अथवा वक्तव्योऽसौ स्वरूपमात्रादन्यो विशेषार्थः। अथ न स्वरूपं नाम किञ्चिदनुगतमिष्यते मया किन्तु विशेषरूपासु व्यक्तिष्वेव स्वरूपशब्दो नानार्थः सन्निविशत इत्यभिधत्से तर्हि गतमनेन न्यायेन गोत्वादिसिद्धिप्रत्याशया। नच प्रतिव्यक्तिस्वरूपपदसमयग्रहोपपत्तिः। यदि च स्वरूपं भेदः स्यात्तदा धर्म्मिणि दृष्टे स्वरूपं दृष्टमिति क्वचिन्न सन्देहः स्यादिति। यदि चाभिन्ने भेदो निविशेत तदा याप्येका व्यक्तिः प्रमीयते घटादिः सापि तेनैव भेदेन नैका स्यादित्येकाभावे वानेकमपि न व्यवतिष्ठते। एतेन न भेदावच्छिन्ने नाप्यभेदावच्छिन्ने भेदो निविशते किन्तूदासीन इत्यपि निरस्तम्। अतएव भेदो नाम स्वरूपान्योन्याभाववैधर्म्म्यानात्मको धर्म्मान्तरं पृथक्त्वापरनामकमित्यपि परास्तं सोपि हि स्वाश्रये भिन्ने निविशेताभिन्ने वेत्यादियथोक्तदोषलङ्घनाजङ्घाल एव स्यात्। स्वाश्रयेण च सह स्वस्मिन्भेदभयाद्यदि स एव भेदो निविशते तदात्माश्रयः अन्यश्चेत्तस्मिन्नेव तस्मिन्नप्यन्य इत्यनवस्था क्वचिदपि गत्वा भेदभेदाश्रययोर्भेदास्वीकारे च तदैक्यद्वारिकामूलपर्य्यन्तमेकता धावेत्। "तदद्वैतश्रुतेस्तावद्बाधः प्रत्यक्षतः क्षतः। नानुमानादि तं कर्त्तुं तवापि क्षमते मते। अद्वैतागममासीरे साधु साधुन्वती परान्। सेवा मेवाश्लयत्यर्थापत्तिपत्तिपरम्परा।" नन्वद्वैतश्रुतयो वर्णपदविभक्तितदर्थादिभेदानुपजीव्यार्थं प्रतिपादयन्त्यः स्वोपजीव्याभिर्भेदबुद्धिभिर्न कथं बाध्यन्ताम् उपजीवकस्योपजीव्याद्दुर्बलत्वात्। मैवम्। न भेदस्य सर्व्वथैवासत्त्व

मभ्युपगच्छामः । किं नाम न पारमार्थिकं सत्त्वमविद्याविद्यमानत्वन्तु
तदीयमिच्छामएव तदेव च कार्य्यकारणभावोपयोगि एतेन एकमेवे-
त्येवकारव्यवच्छेद्येनाद्वितीयमिति द्वितीयेन नेह नानेति नानार्थेन
किञ्चनेत्यनेन वञ्जनः विना नोपपद्यमानेन व्याघातइत्यपि प्रत्युक्तं
श्रुतिभिश्चाद्वैतार्थाभिः पारमार्थिकमद्वैतं प्रतिपाद्यते नच पारमार्थि-
कमितिरपारमार्थिकधिया शक्यबाधा माभूच्छुक्तिरजतधिया परमार्थ-
शुक्तिमितिबाधः यत्र त्वग्निरनुष्णइति बुद्धेरुष्णबोधोपजीवना दुष्ण-
बोधेनानुष्णबुद्धिबाधः तत्र द्वयोरप्यविद्याविद्यमानत्वाद्बाधोयुक्तः ।
ननु तत्रापि तद्व्यनुष्णता पारमार्थिक्येव साध्यतामबाधनाय । मैवम् ।
अनुष्णताया जलादिदृष्टान्तसजातीयायाः शीताद्यव्यावृत्तस्वरूपायाः
प्रसाधनेनाविद्याविद्यमानत्वएव विश्रामात् तदीयैवंविधरूपतानङ्गी
कारे चाद्वैतस्यैव नामान्तरकरणापत्तेः ततस्तस्यां ज्ञेयज्ञानादिभेदा-
वश्याभ्युपेयतया जगद्बाधयुक्तिकवलाप्रवेशासम्भवात् अद्वैते च द्वैता-
श्रयस्य बाधस्य वास्तवस्यानवकाशादपारमार्थिकत्वसम्भावनापि दूरत
एवापसरतीति । ननु किमद्वैतपरमार्थताभ्युपगमेन समाहितम्भवति
यत उपजीव्यबाधादद्वैते प्रमां श्रुतिर्ज्जनयितुं न शक्नोतीति ब्रूमः ।
मैवम् । अद्वैतं हि पारमार्थिकमिदं पारमार्थिकभेदेन विरुध्यते
नत्वविद्याविद्यमानेन तदविद्याव्यवस्थितं भेदं तद्बोधस्योपजीवन्त्या न
परमार्थाद्वैतबुद्धेरुपजीव्यबाधः । यदि श्रुतिजन्या भवत्यप्यद्वैतबुद्धिर-
विद्याविद्यमाना तथापि तद्विषयस्तावत्परमार्थसदेवाद्वैतं विषयविरो-
धेन च तस्या बाध्यता सच नास्तीति तस्मात् "पारमार्थिकमद्वैतं
प्रविश्य शरणं श्रुतिः । बाधनादुपजीव्येन बिभेति न मनागपि ।"
श्रुतिरप्याह । द्वितीयाद्वै भयं भवतीति तथाद्वैतं ब्रह्मैवेदं सर्व्व
मिति श्रुत्यर्थेन सद्वैक्यमापन्नं ब्रह्मैव स्यात् विज्ञानमानन्दं ब्रह्मेति
श्रुत्या च ज्ञानात्मकतया व्यवतिष्ठते तेन यदिदमद्वैतज्ञानं श्रुत्या
जनितं तद्विज्ञानाद्वैतात्मन्येव निविशते । ननु कथं तस्य श्रुत्या

अन्यत्वमुपपद्यते सत्यमेवं स्यात् यदि तस्य पारमार्थिकी अन्यथा अन्यतापि स्यात् अविद्याव्यवस्थिता तु तदन्यता न पारमार्थिकेन तदनन्यत्वेन विरुध्यते अतएव श्रुत्येदमेकं साध्यते यत्तत्र यच्चैकता भेदाभावो यदि चैकसंख्या यदि वा ज्ञानात्मत्वं यदि वा अन्य एकत्वनामा कश्चिदभेदापरपर्य्यायो धर्म्मस्तदत्त्वं बोध्यते तत्राद्वैत व्याघातकत्वान्न सोढुं शक्नोति तदा तदपि निष्पीडनमसहमानं ज्ञानश्रुतिजन्यत्वेन सहैव निवर्त्तताम् । यत्तु तादृशस्याद्वैतस्य धर्मस्य धर्म्मितया प्रमितं तन्मात्रमबाधादधिगतं परमार्थतोव्यवतिष्ठताम् नहि परमार्थशुक्तीरजततया प्रतीयते यदा तदा बाधात्तत्र रजतत्वे व्यावर्त्तमाने शुक्तिव्यक्तिरपि तदपराधान्निवर्त्तते सेयमद्वैतबुद्धिर्न तर्क मवताय्यं प्राज्ञैरपनेया यदाह श्रुतिः नैषा तर्केण मतिरपनेयेति। तस्मात् "धीधना बाधना यास्यास्तदा प्रज्ञां प्रयच्छथ। चेमं चिन्ता मणिं पाणिलब्धमब्धौ यदीच्छथ।," सेयमद्वैतदृष्टिर्दृष्टार्थापि यदाह स्वल्पमप्यस्य धर्म्मस्य त्रायते महतोभयात् । तस्मात् "ईश्वरानुग्रहा देवा पुंसामद्वैतवासना। महाभयकृतत्राणा द्वित्राणां यदि जायते।," तस्मात् "आपाततो यदिदमद्वयवादिनीनामद्वैतमाकलितमर्थतया श्रुतीनाम्। तत्स्वप्रकाशपरमार्थविदेव भूत्वा निष्पीडितादहह निर्व्वहते विचारात्।," तदिदमेताभिरात्ममतसिद्धसद्युक्तिलक्षणोपपन्नाभिर्युक्तिभिरुपनीयमानमद्वैतमविद्याविलास लालसोऽपि श्रद्धातु भवान् तदनूचानयैवोपनिषदर्थश्रद्धयाध्यात्मं जिज्ञासमानः परमात्मतत्त्वं क्रमाद्वृत्तिव्यावृत्तचेताः स्वप्रकाशसाक्षिकं माक्षिकरसातिशायि स्वात्मनैव साक्षात्करिष्यते । यथाच परिहृतचापलमात्मतत्त्वामृतसरसि निमज्ज्य रज्यति निरायासमेव मानसं तथाहमकथयं नैषधचरितस्य परमपुरुषस्तुतो सर्गइत्येषा दिक् ।

"अभीष्टसिद्धावपि खण्डनानामखण्डि राज्ञामिव नैवमाज्ञा । तत्त्वानि कस्मान्न यथाभिलाषं सेद्धान्तिकेऽप्यध्वनि योजयध्वम् ।,"

तदेतादृशीषु सर्व्वास्वपि दर्शनस्थितिषु कामममाकीनाः खण्डन-युक्तयः प्रगल्भन्ते यासामीश्वरपरवशां विश्वव्यवस्थामनास्थाय निर-सनमशक्यं तासामवतारणार्थमयं प्रावादकप्रवादोपन्यासः। तथाहि यदि दर्शनेषु शून्यवादानिर्व्वचनीयपक्षयोराश्रयणं तदा तावदमूषां निराबाधैव सार्व्वपथीनता। यदि तु प्रमाणादिसत्त्वाभ्युपगमस्य म-तावलम्बनं तदापि लक्षणखण्डनयुक्तीनां लक्षणविशेषखण्डने लक्ष्य-खण्डनयुक्तीनाञ्च तद्विषयप्रमाणविशेषखण्डने प्रत्येकं तात्पर्य्यम्। नच सोऽयमादिलक्षणप्रमाणखण्डनेऽपसिद्धान्तापत्तिः तादृश्याः सूत्रादि व्या ख्यायाः खण्डप्रमानत्वात्। नच वाच्यं लक्षणविशेषवत् व्यवस्थापक प्रमाणविशेषसूत्रादिव्याख्याविशेषखण्डनपरत्वेन लक्षणान्तरं प्रमाणा न्तरं व्याख्यान्तरञ्च प्रसज्येत भवतोऽपीति वितण्डाकथामालम्ब्य खण्डनानां वक्तव्यत्वात् तत्र च व्याहत्य स्वपक्षनिर्व्वाहं प्रति पर्य्यनु-योगानवकाशात् एवञ्च सति वादिदर्शनमाश्रित्यापि खण्डनप्रयोगो निर्व्वाधएव एकदेशिवत्प्रत्यवस्थातुं शक्यत्वात् वैयाकरणानामिव वा शब्दसिद्धिप्रश्नस्य परकीयतत्त्वज्ञाननिरूपणार्थं समानपक्षस्थित्यापि पर्य्यनुयोगसांव्यावहारिकतायाः सम्भवात् वस्तुस्थितिं कुर्व्वाणेन च विचारकेणावश्यमेतायुक्तयउद्धरणीयाः अन्यथा वस्तु व्यवस्थितेरशक्य त्वादिति वादेऽपि प्रयोगः सम्भवत्येव खण्डनयुक्तीनाम् जल्पस्वेका कथा न सम्भवत्येव सामयिकी वितण्डा द्वयशरीरत्वात् अन्यथा जल्पद्वयेनापि किमित्येका कथा न कल्प्यते अवोचाम च जल्पविचार प्रस्तावे विस्तरेण तदिति। जल्पकथयापि वाभिधाने स्वपक्षे व्याहत्य सदोषस्यापि प्रमाणतयाभिधानं कृत्वा तदीयोद्भावनकारी काममपि खण्डनयुक्तिमवतार्य्य बाधनीयइति जल्पेपि नात्यन्तमनवकाशाः खण्डन युक्तयः।

कीदृश्यः पुनस्ताः। उच्यन्ते। तथाहि लक्षणाधीनतावल्लक्ष्य व्यवस्थितिः लक्षणानिचानुपपन्नानि ज्ञानाधिकरणादिलक्षणानिरूपणा

दादेश्च चक्रकाद्यापत्तेः तेषु तावत्तत्त्वानुभूतिः प्रमेत्ययुक्तं तत्त्वशब्दार्थस्य निर्व्वक्तुमशक्यत्वात् तस्य भावोहि तत्त्वमुच्यते प्रकृतश्च तच्छब्दार्थः नचात्र प्रकृतं किञ्चिदस्ति यत्तच्छब्देन परामृश्यते अथानुभूत्या स्वर्वीचीविषय आक्षेपाद् बुद्धिस्थः कार्य्यते स तच्छब्देन परामृश्यते वक्तृश्रोतृबुद्धिस्थतायामेव प्रकरणपदार्थविश्रामात् तेन यस्यार्थस्य योभावस्तत्तस्य तत्त्वमुच्यते अरजतादेरपि रजताद्यात्मना अनुभूतिविषयतासम्भवादसत्यानुभूत्यव्यवच्छेदात् भवितुरतत्त्वशब्दार्थत्वप्रसङ्गेन च धर्म्मंशे विशिष्टे च प्रमाया अप्रमात्वापातात् अथोच्यते अवयवार्थचिन्तया दूषणाभिधानमिदं त्यज्यतां यतोयं तत्त्वशब्दः स्वरूपमात्रवचनइति एतदप्ययुक्तं स्वरूपत्वस्य जातेरुपाधेर्वा स्वात्मनि वृत्त्यवृत्तिभ्यामनुपपत्तेः स्वरूपशब्दार्थस्यैकस्यासम्भवेन प्रतिविषय व्यावृत्त्या लक्षणस्याव्यापकत्वापातात्। कथञ्च तत्त्वेति विपर्य्यासादेर्निरासः तथाहि शुक्तौ योरजतमितिप्रत्ययः सोपि स्वरूपबुद्धिर्भवत्येव नहि धर्म्मी वा रजतत्वं वा न स्वरूपं नापि तयोः प्रतिभासमानः सम्बन्धो न स्वरूपमिति युक्तं समवायोहि तयोः सम्बन्धः सच स्वरूपमेव सत्यं समवायास्वरूपं सएव तु शुक्तिव्यक्तौ रजतत्वस्य नास्तीति चेत्। मैवम्। तच्च नास्तित्वेपि स्वरूपताया अव्यावृत्तेः नहि गृहे देवदत्तोनास्तीति स्वरूप न स्यात् न स्वरूपमात्रं तत्त्वमुच्यते किन्तु यद्देशकालसम्बन्धि यत्स्वरूपं प्रतीतं तस्य तद्देशकालसम्बद्ध स्वरूपं तत्त्वमुच्यत इति चेत्। मैवम्। देशकालसम्बन्धांशे प्रमाया अप्रमात्वापातात् तयोः स्वरूपमेव तत्त्वशब्दार्थइति चेन्न तत्त्वपदस्यानेकार्थत्वे लक्षणाव्यापकत्वापत्तेः। अथैवं ब्रूषे यद्यथाभूतं प्रतीयते तत्तथा परमार्थतो व्यवस्थितं तत्त्वमुच्यते। नैतदपि युक्तं यद्यथाभूतं प्रतीयते तद्यदि प्रतीतिसमयमपहाय कालान्तरे तथाभूतं स्यात्तदाप्येवं तत्त्वं स्यादेवेति भाविपाकजरागः कुम्भः श्यामदशायामपि रक्तापिक्तिना रक्ततयोपलभ्यमान स्तत्त्वं स्यादिति तद्बुद्धेः प्रमात्वापातः।

भिर्नाम यच्छून्यत्वमनौपाधिकत्वम् उपाधिः साध्यव्यापकत्वे सति सा-
धनाव्यापकः। अयञ्च "एकसाध्याविनाभावे मिथः सम्बन्धशून्ययोः।
साध्याभावाविनाभावी स उपाधि र्यदत्ययः।" इत्यस्य व्यतिरेकमुखस्य
यदत्ययः स उपाधिरिति योच्यमानस्य पर्य्यवसितोऽर्थः। तद्धर्म्मभूता
हि व्याप्ति र्जवाकुसुमरक्ततेव स्फटिके साधनाभिमते च काचीत्युपाधि
रसावुच्यते तदिदमाहुः। "अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः।
तैर्दृष्टैरपि नैवेष्टा व्यापकांशावधारणा।" स चोपाधिर्निश्चितइवा
शङ्कितश्च यन्नेदमुच्यते। "यावद्व्यतिरेकित्वं शतांशेनापि शङ्क्यते
विपक्षस्य कुतस्तावद्धेतोर्गमनिकाबल" मिति चेन्न साध्यव्यापके पक्षे
तदत्वेपि प्रसङ्गात्। तद्व्यतिरिक्तइत्यपीति चेन्न बाधोन्नीतस्य तस्या
व्यापनात् अन्यथा निरुपाधिसम्बन्धित्वे बाधासिद्धेः। यदाह बाधेन
वोपाधिरुन्नीयते अन्येन वेति न कश्चिद्विशेषः। एतदर्थमपि विशेष-
णीयमिति चेन्न तथापि साधनाव्यापकत्वे सतीति तद्व्याप्त्यनवधारणे
न शक्यावधारणम् एवं साध्यव्यापकइत्यपि। अथ मन्यसे अदृष्टव्यभि
चारसाध्यत्वं साध्यव्यापकत्वं न वस्तुगत्या व्यभिचारिसाध्यस्याप्यापा-
ततोऽदृष्टव्यभिचारसाध्यत्वसम्भवात् तस्याप्युपाधित्वापत्तेः। न दृश्यत
इति च निरूपयितुमशक्यम्। व्याप्तिग्रहकाले च साध्यत्वाभावेन तद
व्यभिचारः कथमवधार्य्यः साध्यं व्यापकमपेक्षितमिति चेन्न व्याप्त्यनव
गमे व्यापकार्थानवगमात्। सम्भावितव्यापकभावोव्यापकोऽपेक्षितइति
चेन्न व्यापकस्यानिरुक्तौ किं रूपतया सम्भावनापि स्यात्। अथ साध्य
व्यापकइत्येव भद्रं तदानीं साध्यत्वाभावेपि साधयितुमर्हत्वस्य विव-
क्षितत्वात् न कथं घटवत्त्वमिदमेव साधयितुमर्हमिदं नेति व्यापक
त्वादिति वक्तुमशक्यत्वात्। नच साधनाव्यापकत्वं सर्वत्र निर्णेतुं
शक्यम् न श्यामो मैत्रतनयत्वादित्यत्र शाकाद्याहारपरिणतिपरम्परा-
या मैत्रतनयेऽभावस्य दुरधिगमत्वात्। यत्रोक्तलक्षणस्य निश्चायकं
प्रमाणमस्ति तत्र निश्चितोपाधित्वम् अन्यत्र शङ्कितोपाधित्वं नैत्र

तनयत्वव्याप्यशाकाद्याहारपरिणतिपरम्परया स्यात्तथमित्यत्र नियामकाभावादिति चेन्न मैत्रतनयत्वेनैव हेतुना तस्यापि प्रसाधने तच्छ्रायाया अपि कर्त्तुं शक्यत्वात् । तथापि तत्सामग्रीत्युपाधिपरम्पराभिधाने च तस्याः तस्या अपि मैत्रतनयत्वेनैव साधनस्य कर्त्तुं शक्यत्वात् । अनवस्थैवं स्यादिति चेन्न उपाध्युपन्यासएव कुतोऽनवस्था न स्यात् साध्यसामग्र्या उपाधित्वे धूमानुमानसाधारण्यात् । एवञ्च साध्यसामग्र्युपाधित्वव्यवच्छेदार्थमपि लक्षणं विशेषणीयं श्यामत्वादौ साध्ये शाकाद्याहारपरिणतिपारम्पर्य्यादेः तस्मिन् साध्ये श्यामत्वादेरुपाधित्वसम्भवेन कथमुपाधिरपि साधयितुं शक्यतइति चेत् नैवम् प्रत्येकं द्वयोरपि मैत्रतनयत्वादिना साधने साधनाव्यापकत्वस्य शङ्कितुमशक्यत्वात् । अन्यथा सकर्त्तृकत्वे साध्ये अदृष्टजन्यत्वम् अदृष्टजन्यत्वे च सकर्त्तृकत्वमुपाधिरित्युभयासिद्धिः स्यादेवं बुद्धिमत्पूर्वकत्वे प्रयत्नवत्पूर्वकत्वं प्रयत्नवत्पूर्वकत्वे च बुद्धिमत्पूर्वकत्वमेवं वह्नित्वजात्याक्रान्तवस्त्वेऽपीन्धनजन्यतेजोवत्त्वं तस्मिन् वह्नित्वजात्याक्रान्तवत्त्वमुपाधिः स्यादित्यादि विश्वमनुमानव्याकुलं स्यात् । अतएव साध्यसाधनसम्बन्धं प्रति व्यापकत्वं साध्यव्यापकत्वमित्यपि प्रत्युक्तम् । यत्राप्युपाधिर्निश्चीयते तत्राप्यतीन्द्रियोपाधिविषये तदभावस्य साधनाव्याप्त्यर्थमनुमेयतायां सोपाधीक्रियमाणेन साधनेनैव सत्प्रतिपक्षस्य कर्त्तुं शक्यत्वात् । तथा सति तत्र शङ्कितोपाधित्वमेव निर्व्यूढं स्यास्यतीति चेत् । एवं सुवाणो नियतमजैषीः परं मन्दमन्दाक्षं न प्रतिपद्यं तथाहि लोकतन्निश्चितोपाधिभाव आशङ्कितोपाधिकत्वमपि तदनुकूलं मन्यते कोऽन्यो जितलज्जात् । नच क्वचिन्निश्चितोपाध्यनभ्युपगमे तच्छङ्का शक्या यत्र प्रत्यक्षेणोपाधिनिश्चयस्तदेव तद्दर्शनस्थानं भविष्यतीति चेन्न ऐन्द्रियकबाधे तज्जातीयस्यातीन्द्रियस्याप्रयोजकीक्रियमाणेन हेतुनैव साधयितुं शक्यत्वात् । नच यदेकमेकजातीयमैन्द्रियकं तदन्यमैन्द्रियकबाधे हेतुबलादतीन्द्रियं न प्रसाध्येत पाकस्पर्शनात् जठरानलादि साधनाव्यापकत्वे

सति साध्यव्यापक इति च शाकाद्याहारपरिणतिपरम्परा साध्यं न व्याप्नो-
तीत्यव्यापकतादोषः । नहि शाकादित्वं नाम किञ्चिदेकमस्ति यत्साध्यं
व्याप्नुयात् । अस्तु वा कथमपि तथापि श्यामत्वं न व्याप्नोति इन्द्र
नीलमण्यादिश्यामत्वस्याहाराजन्यत्वात् । शरीरश्यामत्वं साध्यं तच्च
व्याप्नोत्येवेदमिति चेन्न व्याप्तावुपाधेरभिधेयत्वात् नच पुरुषश्याम
त्वेन व्याप्तिः । हेतुपक्षधर्म्मतयैव हि साध्यं पक्षधर्म्मः सिद्ध्यति न
व्याप्त्या अन्यथा पुरुषपदस्याव्यवच्छेदकस्याविशेषणत्वापातात् । पर-
म्परासम्बन्धिकज्जलादिलेपश्यामलत्वव्यवच्छेदकत्वे च संयुक्तश्यामपुरुष
समवेतश्यामत्वस्य परम्परासम्बन्धिनः कथं व्यवच्छेदः स्यात् । नच
साध्यसाधनसम्बन्धाद्दृष्टव्यभिचारत्वं साध्यव्यापकत्वं मा रूपसाक्षात्-
कृतिकरणादेस्तैजसादित्वे साध्ये भूद्भूतरूपवत्त्वादेरुपाधित्वम् ।
साधनेनापि च विशेषणतया निवेशेन यदि केवलसाध्यव्यापकं व्यव-
च्छेद्यं तदा तस्य व्यभिचारे शङ्काधानक्षमस्याप्युपाधित्वं न स्यात् ।
अथ न किञ्चिद्व्यवच्छेद्यं तदा विशेषणत्वासिद्धिरेव । नहि प्रयोजन
मात्रादिशेषणमर्थवद्भवति किन्तु किञ्चिद्व्यवच्छेदादिति अन्यथा शरी-
रजन्यत्वमिवाकर्तृकत्वे व्यर्थमसिद्धौ पर्य्यवस्येदिति । किञ्च आभासे
व्यतिरेकिणि पक्षधर्म्महेतौ जीवच्छरीरं पृथिव्याद्यष्टद्रव्यातिरिक्ता-
नेकद्रव्यवत् प्राणादिमत्त्वादित्यादौ कथमिदमुपाधिलक्षणं व्यव-
स्थाप्यं नह्याभासे व्यतिरेक्यनुमानात्मनि यत्साध्यं तदुपाधिनाव्याप्त-
मिष्यते तस्य पराभिमतस्य क्वचित् सिद्ध्यापत्तेः । व्यतिरेकव्याप्तावु
पाधिश्चेत् तर्हि व्यतिरेके यद्व्याप्यं तस्य व्याप्यउपाधिरवश्यं मन्तव्यो
ऽन्यथोपाधेरन्वये साध्यान्वयापत्तिरित्युपाधेर्व्यतिरेकव्याप्त्यवश्यम्भाव-
स्याभ्युपगम्यतया उपाधेर्यद्व्यापकं तद्व्यतिरेक उपाधिर्व्यतिरेकस्य व्या-
प्यतया मन्तव्य इति परसाध्यापत्तिः । असमव्याप्तिकयोरन्वयव्याप्ति
साध्यसाधनभाववैपरीत्येन व्यतिरेकव्याप्तेरिति । नच दोषान्तरमेव
तर्हि वाच्यमिति वाच्यं हेतोः पक्षधर्म्मत्वस्थितौ व्याप्तिरक्षार्थं त्वयोपा-

भ्युपगमध्रौव्यात्। भवतु वा या काचिद्व्याप्तिर्नाम तत्स्वरूपएवानुमिति भावात् तस्याश्चानुमितेश्च व्याप्तिरेकत्वा ततश्चात्माश्रयः। तद्भेदे वाननुगमाविनिगमौ स्यातामिति व्याप्तिपक्षधर्म्मते अनुमितिं भावयत इति वदन्ति।

तत्र केयं पक्षधर्म्मता। पक्षाश्रिततेति चेन्न नैयायिकादीन् प्रति प्रमेयत्वस्याहेतुत्वप्रसङ्गात् विषयविषयिभावस्य ज्ञेयज्ञानस्वरूपातिरिक्तस्यानङ्गीकारात् तयोश्च ज्ञेयाश्रितत्वायोगात्। कश्चायं पक्षो नाम यद्धर्म्मत्वं पक्षधर्म्मत्वं सिषाधयिषितधर्म्माधर्म्मीति चेन्न सिषाधयिषा हि प्रतिपिपादयिषा वा स्यात् प्रतिपित्सा वा। आद्ये स्वार्थानुमित्यनुदयप्रसङ्गः। द्वितीये वासुरभिगन्धानुमेयकुत्सितरसविषय स्वार्थानुमित्यनुदयप्रसङ्गः। न चानवधारितधर्म्माधर्म्मी पक्षः हेतु मत्तया प्यनवधारणेऽनुमानोदयनिदानभावासम्भवात्। अवधारणे वानवधारितधर्म्मत्वानुपपत्तेः। न चानवधारितहेतुविषयधर्म्माधर्म्मी पक्षः। तथाहि केनानवधारितधर्म्मा न तावदनुमानप्रयोक्त्रा स्वयमज्ञाते परं प्रत्यप्रयोगात्। प्रतिवादिनेति चेन्न प्रतिवादिविदितेष्वर्थे वादितया परस्परविद्योत्कर्षापकर्षनिरूपणार्थमनुमानदर्शनात्। तथानवधारणं यत्किञ्चिद्धेतुविषयधर्म्मगोचरं वादिप्रयोक्तव्यहेतुविषयगोचरं वा। न तावदाद्यः अग्निमत्त्वनिश्चयदशायामपि तत्तद्धेतुविषयबहुतरापरापरधर्म्मानवधारणात् धूमं प्रति पर्व्वतस्य पक्षधर्म्मत्वप्रसङ्गात्। न द्वितीयः तथापि तत्र प्रसङ्गात् सद्धेतूनामपि वादिप्रयोक्तव्यत्वात् असाधारणविवक्षायाश्चाननुगमात् इतरेतराश्रय दोषाच्च। पक्षधर्म्मत्वेन हेतुत्वनिरूपणात् व्याप्तपक्षधर्म्मत्वस्य हेतुत्वात् हेतुना च पक्षनिरूपणात् स्वार्थानुमाने च हेतोरप्रयोक्तव्यत्वात् पक्षाभावेनानुमानानुदयप्रसङ्गात् विरुद्धहेतौ च पक्षत्वासत्त्वप्रसङ्गात् तत्र साध्यस्य तद्धेतुविषयत्वाभावात् हेतोरेव च साध्यविपरीत व्याप्त्या दुष्टत्वात्। एतेन सन्दिग्धसाध्यधर्म्माधर्म्मी पक्षः साध्यत्वञ्च

स्वपरार्थानुमानसाधारणमुत्पाद्यज्ञानत्वमिति निरस्तम् प्रतीति व्याप्ति बलेन सामान्यतोव्यापकावगाहनप्रवृत्तं विशेषमादाय परं पर्य्यव-साययितुं व्याप्यसामर्थ्यं सेति चेन्न तस्याः सामान्यविषयाया अनुप-पत्तेरसिद्धेः व्याप्तिवत्सम्भवात् अनुपपत्तित्वे व्याप्त्यनुप्रवेशात् अधिक विषयाकाङ्क्षित्वे विरम्यव्यापारापत्तेः मानान्तरत्वापत्तेर्वा । विशेष विषयायाश्चानुपपत्तिश्चेऽतिप्रसङ्गात् । पक्षधर्म्मतया च यदि साध्य व्यक्तिभेदः सिद्ध्येत् तर्ह्यनुमाय तां प्रत्यक्षेण पश्य न पुंशब्दात् पुरु-षानुमायी प्रत्यक्षेण पुरुषद्वयदर्शने तद्विशेषासंशयी स्यात् । प्राग्वि-शेषादर्शनात्तथा स्यादिति चेन्न पश्चात्तत्र तद्दर्शित्वान्न संशयीतेति ।

उपमानमपि किमुच्यते । सादृश्यज्ञानमुपमानमित्येके तन्न स्मृता वपि प्रसङ्गात् । अनुभवइत्यभिधाने च सदृशाविमावितीन्द्रियजेपि प्रसङ्गात् । सोऽपि गवयो गवा सदृशो गवयत्वात् गवयान्तरवदित्यनु-मानस्यापि तत्त्वापत्तेः । एवमाप्तोक्तिजेऽपि । किञ्चोपमितिलक्षण मिदमुपमितिकरणलक्षणं वा स्यात् । नाद्यः सादृश्यस्योपमेयत्वापत्तेः । सदृशे चोपमेयव्यवहारोऽस्ति चन्द्रोपमेयं मुखमित्यादि सदृशमितिः सेति चेन्न चन्द्रादिकरणसम्भवे तदुदाहरणासिद्धेः । नापि द्वितीयः सादृश्यज्ञानस्य सर्व्वस्यासम्भवात् प्रमाणान्तरवत्प्रमाणान्तरव्यापार फलजनकताया दर्शयितुमशक्यत्वात् । नच सादृश्यमनुगतमस्ति मुख सादृश्यस्य हस्तसादृश्यस्य च भेदेनैवोपलम्भात् । नच सादृश्यरूप-त्वमनुगतं तेष्वपीत्यदोषः । तथापि सादृश्येन सह सादृश्येऽनेकस्य-त्वादेः सादृश्यरूपत्वाश्रिते सादृश्यरूपत्वस्याश्रयणाभ्युपगमे परस्परा श्रयभावो ऽनभ्युपगमे चाननुगमः । तयोः सादृश्यानभ्युपगमे चान्य-त्रापि तथापत्तिः । किञ्च वैधर्म्य प्रतीतेरपि प्रमाणान्तरत्वमेवं स्याद विशेषात् । एवमेवाभ्युपगमे च परिगणितप्रमाणाधिक्यप्रसङ्गो वा सादृश्यबुद्धेरपि वा परिगणितेष्वेवान्तर्भावः स्यादिति । अप्रतीय मानस्य प्रतीयमानेन सह सादृश्यप्रमितिरुपमानमित्यपि न चात्र-

वाक्यादपि तथाप्रमितेः । यच्च तद्व्यापारो गवयीति चेन्न यथायथ
अभिन्नाविति वत् यथायथ सदृशाविति पूर्व्वप्रतीतस्य प्रतीयमानेन सहै-
न्द्रियकसादृश्यप्रतीतावपि प्रसङ्गात् । इन्द्रियासम्प्रयुक्तस्येति चेन्न
प्रत्यक्षतो गोगवयसादृश्यं प्रतीत्य सापि च गौर्गवयेन सदृशी गो-
त्वादियमिवेत्यनुमितावपि प्रसङ्गात् । अलिङ्गजापीति चेन्न नन्वेवं
प्रत्यक्षानुमानशब्दानुत्पन्ने सतीत्युक्तं स्यात् । तथाच विशेषणमेव सम-
र्थमित्यप्रतीयमानस्येत्यादि व्यर्थम् । नोपादेयमेव पदान्तरमिति चेन्न
अर्थापत्तेरवश्यं सम्भवात् तेन सार्द्धमेतत्सादृश्यस्यानेन सार्द्धं तत्सादृ-
श्यव्यतिरेकेणानुपपद्यमानत्वात् । अन्यथा अन्यथाप्रत्ययोत्पत्ति विषयं
प्रमाणान्तरमापद्येत । तस्मादयं ह्रस्व इति प्रतीते अस्मात् स दीर्घ
इति चान्यथा कतमा प्रमा स्यात् । अर्थापत्तिं प्रमाणान्तरमनिच्छता
पीयमर्थापत्तिरनुमानेऽन्तर्भाव्या पृथक्प्रमाणीकर्त्तव्या वा । एतेना
प्रतीतगवयगवान्तरसामान्यस्यादृष्टान्तानुमानासम्भवात् गवयेनानेन
सदृशी सा गौरितिमितिरुपमितिरित्यपि व्युदस्तम् । तयैतत्सादृश्य-
स्यैतेन तत्सादृश्यं विनानुपपत्त्यैव सिद्धेरिति । अनवगतसङ्केतसंज्ञा
समभिव्याहृतवाक्यार्थस्य संज्ञिन्यनुसन्धानमुपमानमित्यपि न प्रकृत
सङ्केतेरेवम्भूतोपमित्यव्यापनात् । अकृतसङ्केतीत्यभिधेयमिति चेन्न
अनुभूतकालान्तरप्रकृतसङ्केतेरव्यापनात् । अव्यर्थमाण इति चेन्न
कदाचिदव्यर्थमाणतया तत्रापि सम्भवात् सर्व्वदा अव्यर्थमाणतायाः
क्वचिदप्यसम्भवात् । उपमितिप्रामाण्यमिति चेत्स्यादेवैतदप्युपमितिर्ल-
क्षिता स्यात् तदर्थमेव तु लक्षणमिदम्भवतः । किञ्च सर्व्वैरनवगत
सङ्केतत्वस्य प्रकृतेऽप्यसिद्धेः केनाप्यनवगतसङ्केतत्वस्य ज्ञानेऽपि
सम्भवात् उपमानेति च पूर्व्वंनिरस्तम् । यस्याः प्रमितेर्यत् प्रमाणेति
चाभिधाने अनुगतलक्षणाभावात् व्यक्तौ पतनेन लक्षणेऽननुगत्यापत्तेः ।
संक्षेपत्यप्याकुलं गोसदृशो गवयः प्रायः कानने गच्छति इत्यतइतिश्रुत-
वाक्यस्य काननपदाविदितसङ्केतेर्गवयपदविदितसङ्केतेश्चासंज्ञासंज्ञि

सम्बन्धप्रतिपत्तिफलायामीदृशप्रतिपत्तौ गतत्वेनातिव्यापकत्वात्। वि-
नापि वा प्रायःशब्दमभिहितस्य तस्यानुसन्धाने प्रसङ्गः। तत्र काननं
संज्ञासंज्ञिसम्बन्धावधारणोऽप्यन्यत्रैव पदान्तरसमभिव्याहारोत्थाया
अन्यथानुपपत्तेः प्रमाणत्वात् नतूपमानस्य। उपमैव संज्ञासमभिव्याहृ-
तेति विशेषणे च पूर्व्ववदेव निरासः। वाक्यार्थेत्यपि तादृगेव प्रतिपत्ति
कालात्तातिदेशवाक्यगतकाननादिपदार्थस्य तथाविध प्रत्ययाव्याप-
नात्। वाक्यैकदेशस्यापि वाक्यत्वेन विवक्षितत्वे सदृशो गवय इत्यादि
कारिकोऽपि प्रत्यये प्रसङ्गात्। प्रतीत्युत्पत्तिं प्रतिप्रयोजकीभूतं याव-
त्तावद्वाक्यं विवक्षितमिति चेन्न अन्तर्भावितवनाधिकरणतादृशप्रति-
पत्तिं प्रति तस्य प्रयोजकत्वात्। उपमितिं प्रतीति तु पूर्व्ववन्निरस्त-
मिति। यावत्संज्ञासंज्ञिबुद्धिप्रापयिकं तावद्विवक्षितमिति चेन्न लक्षणा
सहचरितसंज्ञोपदेशार्थानुसन्धानेऽपि प्रसङ्गात्। किञ्च यदा तर्कानु-
सन्धानविरहिणः सत्यप्येवंविधानुसन्धाने सादृश्यमेव गवयपदप्रवृत्ति-
निमित्तमिति सति फलमुत्पद्यते। तदा तस्याप्रमाकरणस्यापि उपमा-
नत्वमापद्यते प्रमाफलकमिति विशेषणप्रक्षेपपक्षे चानुसंहितरूपव्यव-
च्छेद्यतानुमित्युत्पादेनाप्येतादृशानुसन्धानमुपमानं स्यात्। अव्याप्तवि-
षयप्रमाफलकमिति विशेषणीयमिति चेन्न वस्तुगत्या अव्याप्तत्वस्योपमेये-
ऽप्यभावात्। व्याप्ततयाऽनवगम्यमानस्येति च कृते यत्प्रति तल्लिङ्गं तेन
सह व्याप्तत्वावगतमुपमितिकरणमपि न व्याप्नुयात्। उपमेयेन सह
व्याप्तत्वानवगतत्वोक्तावप्यनुमाने प्रसङ्गस्तदवस्थः। अनुमेयेन सहेति
कृते च तदनपायादव्याप्तिस्तदवस्थैव। संज्ञासंज्ञिसम्बन्धप्रमितिकरण-
मिति चेन्न तथात्वासिद्धेः अर्थापत्त्यादितस्तत्सिद्धेर्व्वर्णयमाणत्वात्। अन-
नुमितिजनकं तादृक् प्रतिसन्धानमुपमानमिति चेन्न तज्जातीयस्यानु-
मितिजनकत्वात् व्यक्त्यपेक्षायाञ्च जनकत्वस्य सामान्याकारपर्य्यवसा-
यिनो नियतव्यक्त्यावसम्भावितया अननुगमेन चायुक्तत्वादिति। किञ्च
गोसादृश्यं विना गवयत्वजातौ गवयशब्दार्थताप्रतीतिः कल्पनालाघवं

तर्कमपास्य न स्यादिति तदुपन्यासस्थितौ किमानुमानिकत्वेन तत्र गवय
त्वस्य गवयपदवाच्यताप्रमितिरियं नेष्यते। सम्भवति हि प्रयोगः वि-
मतिपदं गवयशब्दप्रवृत्तिनिमित्तं तथात्वे सर्व्वत्र विषयीक्रियमाण
विपर्य्ययकत्वात् न यदेवं न तदेवं यथा गोत्वं तथाचेदं तस्मात्तथेति। न
चास्ति. सम्भवामूलशैथिल्यादिदोषविरहितर्कनिवेदितविपर्य्ययस्यार्थो
नच तथेति। अथवा गवयपदमसम्भवत्प्रवृत्तिनिमित्तान्तरमनुपपद्य-
मानं प्रोक्तगोसादृश्यसामानाधिकरण्यमर्थाद्गवयत्वप्रवृत्तिनिमित्तक
तामाक्षिपतीत्यर्थापत्तिरेवात्र प्रमाणमस्तु। सा च त्वया व्यतिरेकी
कृत्य परेण पृथगेवावश्यं प्रमाणनीयेति।

शब्दोऽपि न उच्यते। आप्तवाक्यं शब्दः प्रमाणमिति हि न युक्तं
विकल्पानुपपत्तेः। तथाहि कोऽयमाप्तो नाम। यथादृष्टवादीति चेन्न
भ्रान्तिप्रतिपन्नवादिवाक्येऽपि प्रसङ्गात्। प्रमाणदृष्टेतिविशेषणे च तथा
भूतस्यान्यथावादव्यापनात्। यथाप्रमाणेति करणे चांशे तथाभूत-
वादिवाक्यस्यायथार्थस्यापि व्यापनात्। यावद्यथाप्रमाणदृष्टे निरुक्तौ च
प्रायेणातथाभूतत्वादेव लक्ष्याणां तदव्याप्तेः। नहि यावत्प्रमितं ताव-
दभिधीयते यथाप्रमितस्यैव च वक्तुर्वाक्यमितिव्याकारे च युधिष्ठिर
वाक्यस्याप्यनेवम्भूतत्वे नाव्याप्त्यापत्तेः। तत्र विषयइतिविशेषणे च वि-
शेषरूपस्य विषयस्यासाधारण्येनाव्यापकत्वापातात्। अथ निर्दोषस्य
वाक्यं तथेति चेन्न सदोषस्य नास्ति घटइत्यभिधित्सतोऽस्ति घटइति
दैवान्निर्गतयथार्थवाक्याव्याप्तेः। तत्प्रमाणं न भवत्येवेति चेन्न पूर्व्वमुक्तो
त्तरत्वात्। प्रवृत्तिसामर्थ्येन प्रामाण्यावधारणसम्भवादापाततः सन्दे-
हेऽप्यदोषात् सामान्यतोनिर्दोषत्वस्य मीमांसकेऽप्यभावात् विशेषत
स्तथात्वस्यासाधारण्यपर्य्यवसायित्वात्। यथार्थवाक्यं शब्दः प्रमाण-
मित्यत्र को दोषइति चेन्न पूर्व्वोक्तयाथार्थ्यदूषणानि तावत्प्रथमः।
यथार्थत्वविशेषणस्य व्यवच्छेदकत्वाव्यवच्छेदकत्वयोः पूर्व्ववद्दोषश्च द्वि-
तीयः। वाक्यत्वानिरुक्तिश्च तृतीयः।

अथापि किमिदं वाक्यं नाम। एकार्थावच्छिन्नपदसमुदायो वाक्यमिति चेन्न एकत्वविशिष्टत्वावच्छिन्नत्वानां व्याख्यानि दूषणानि तावत्सन्तु पदपदार्थन्तु चिन्तयामः। सुप्तिङन्तं पदमिति केचित् यथा विभक्त्यन्ताः पदमित्यन्ये। तत्र नाद्यः प्रत्येकं निरुक्तस्य चाव्यापकत्वात् पृथक्प्रवृत्तिनिमित्तताया वाक्यलक्षणाव्यापकत्वापातात्। नापि द्वितीयः विभक्त्यर्थस्यानुगतस्यासम्भवात् विभक्तिरित्यनेन सुप्तिङ्प्राग्दिशोविभक्तिरित्यनेन च तसिलादेः पृथक् पृथगेव विभक्तिसंज्ञाविधानात् शब्दसाम्येन च लक्षणायोगात्। किञ्च यथाहति वक्तृत्वस्य विवक्षितत्वे वक्तृमित्यादेरपदत्वप्रसङ्गः। अविवक्षितत्वे देवदत्तइत्यन्ताकारस्य पदत्वापातः तस्य विभक्त्यन्तत्वात्। सार्थकत्वेति चेत् भवतीत्यादौ शवकारादीनां पदत्वप्रसङ्गः शपः सार्थकत्वात्। यतो विहिता विभक्तिस्तदादीति चेन्न शवकारं परित्यज्य पदत्वप्रसङ्गात्। तन्मध्यपतितत्वाच्छवकारोऽपि गृह्यत इति चेत् तर्हि यत्र विभक्तिर्विधीयते तत्र तद्विभक्तिमध्यपतितस्य पदमिति वा विवक्षितं यत्र विभक्तिर्विधीयते तत्तद्विभक्तिमध्यवर्त्तिसहितं पदमिति वा। आद्ये शवकारस्यापि पृथगेव पदत्वप्रसङ्गः लक्षणस्य चाव्यापकता। द्वितीये देवदत्त इत्यस्यापदत्वप्रसङ्गः मध्यवर्त्तिनोऽभावे मध्यवर्त्तिसहितविशेषणाभावात्। क्वचिन्मध्यवर्त्तिसहितस्य क्वचित्केवलस्य चेति यथासम्भवमिति चेन्न एकानुगतलक्षणानभिधाने लक्षणस्याव्यापकतापत्तेर्दुर्निवारत्वात्। किञ्च देवदत्तस्त्वित्यपि पदं स्यात्। अथापशब्दोऽयं पदत्वे सति त्वादेर्विधानस्यावश्यम्भावित्वादिति चेन्न यत एवायमपशब्दस्तत एव भवतो दोषः प्रसज्यते अपशब्देऽपि पदलक्षणं गतमिति। तस्मात्पाणिनिनाचार्येण शब्दसिद्ध्यर्थं पदसंज्ञेयं त्वादिविध्यनुरोधेनापशब्दप्राया मन्यैव कृता नदीसंज्ञावत्। ननु लौकिकपदव्यवहारसिद्ध्यर्थं साधुशब्दविशेषे ततश्च तस्यान्तरेव चकार्यं वाच्यमन्यथा दाक्षीनन्दनोदीरित नदीसंज्ञाप्रत्यभिज्ञायां 'माघः प्रार्थयमानः काननवासीमलीकाभि-

मानी भवानीहेत। उच्यते विभक्त्यन्तमेव. सर्व्वलक्षणप्रवृत्त्या
निष्पन्नं व्यावहारिकं पदमिति लक्षणमस्तु। नैवम् सर्व्वलक्षणप्रवृत्तेः
सर्व्वत्राभावात्। सम्भवत्सर्व्वलक्षणप्रवृत्त्येति चेन्न सम्भवत्त्वं तत्काले
कालान्तरे वा विवक्षितम्। आद्ये देवदत्तश्चिन्त्यपि पदं स्यात् तस्य
विधानकाले विसर्गस्यासम्भावितत्वात्। कालान्तरेऽपीतिपक्षे देवदत्त
इत्यपि पदं न स्यात इत्यादिपदपूर्व्वकालभाविनो यत्वलोपादेरकर-
णात्। शब्दान्तरसन्निधिव्यतिरेकेण यद्भावि लक्षणं तद्विवक्षितमिति
चेन्न जीविकाकृत्य व्याचष्ट इत्यर्थे जीविकां कृत्वा व्याचष्ट इति प्रयुज्य-
मानं वाक्यं स्यात्। एकार्थावच्छिन्नपदसमुदायस्य तत्रापि गतत्वात्
कृत्वेत्यनेन सम्बन्धस्य जीविकामित्यस्योक्तपदलक्षणेन संगृहीतत्वात्।
यदुपाधिना यल्लक्षणप्रवृत्तिस्तदुपाधिसम्पत्तौ तेन निष्पन्नं तथेति
चेन्न यत्र नास्त्युपाधिसम्पत्तिस्तत्र केवले तस्यां सत्यामित्यस्याभावाद
पदत्वापत्तेः। यस्यामवस्थायां यस्य लक्षणस्योपनिपातस्तत्सर्व्वसम्पत्तौ
विभक्त्यन्तं पदमिति चेन्न यस्यामवस्थायामित्यवस्थानां भिन्नभिन्न
कारेण परामर्शे लक्षणस्याननुगमादव्यापकतादोषः अवस्थाना मैक्य-
स्वविवक्षितमसम्भावितञ्च। सर्व्वदा सर्व्वावस्थाविषये लक्षणप्रसङ्गा-
दिति। तत्र भवति भवतो वा पटः पटाविति वा घटं घटाविति
चेत्यतिव्याप्तिः। एतेनापौरुषेयं वाक्यं तदित्यपि निरस्तम्।

का पुनरर्थापत्तिः। अन्यथानुपपत्तिरिति चेन्न यतोऽन्यत्वं तत्-
सिद्धेरग्रे तदसिद्धेः। सिद्धेनानुपपत्तिरिति चेन्न विशेषणावच्छेद्या-
प्रतीतौ तदैयर्थ्ये न तदनुपादाने सर्व्वथानुपपत्त्यर्थतायां पक्षविरोधात्
केनाप्यनुपपत्त्यर्थत्वे साध्यसिद्ध्यपर्य्यवसानात्। प्रमाणयोर्विरोधानुप
पत्तिरिति चेन्न असिद्धत्वात् प्रमाणत्वेनाभिमन्यमानयोरिति चेत्
अभिमतेर्भ्रमार्थत्वेऽतिप्रसङ्गात् ज्ञानार्थत्वेऽप्युक्तदोषानिवृत्तिरेव।
अनिर्णीयमानप्रामाण्याप्रामाण्ययोरित्यत्रापि तथैव तथाहि सम्प्रति
पक्षेऽपि तस्य तदुपपादकप्रमाणाभावकत्वापत्तेः। तत्र विरोधेनव्याप्त्यैवा

प्रमाणत्वनिश्चयः युक्तं तु नैवं तद्विवक्षितमिति चेन्न सत्प्रतिपक्षवदन्य-
थापि विरुद्धार्थत्वेनैवाभासत्वाविशेषात्। तर्कयोर्व्विरोधोऽपेक्षित
इति चेन्न मिथोविरोधेन तर्कयोरप्याभासत्वात्। विशेषप्रवृत्तप्रमाणार्थ
प्रतिक्षेपविषयत्वसंशयोऽविशेषप्रवृत्ततद्विपरीतार्थप्रमाणस्य विरोध
इति चेन्न विशेषविषयप्रमाणाबाधितवैपरीत्ये सति तद्विरुद्धार्थतांशे
संशयस्य दुर्बलस्यानवकाशत्वेनाविशेषप्रवृत्तप्रमाणविषयतां तदीयां
गोचरयितुमप्यसामर्थ्यादेव। अविशेषप्रवृत्तस्य प्रमाणस्य तद्विपरी-
तार्थविशेषविषयस्य च प्रमाणस्य विषययोस्तद्विपरीतत्वविशेषणाप्रती-
त्यङ्गीकारदशायां परस्परविरुद्धत्वप्रतीतौ धर्म्मिणोर्विरुद्धधर्म्माध्या
सस्य भेदस्य विरोधविवेचनस्फुटतद्गर्भप्रवेशतया तत्सहकृतेर्यस्य तन्ना
न्तरीयकस्य वान्यत्र वान्यतएव प्राप्तेः। किञ्चाविशेषप्रवृत्तस्यैव तस्य
किं विशेषविषयत्वम्। अथ सामान्यतः प्रवृत्तस्य नान्तरीयकतया
प्रागेव विशेषविषयस्य विशेषविषयत्वेनाज्ञातस्य विशेषविषयत्वं वा
सामान्यस्य तद्विषयस्य विशेषः उत तद्विषयीकृतविशेषगतं किमपि
धर्म्मान्तरमिदानीं प्रमीयते। नाद्यः अर्थापत्तेर्भ्रमकरणत्वापत्तेः। न
द्वितीयस्तदनुव्यवसायोत्पत्तेस्तद्विषयाप्रतीत्यसम्भवात्। न तृतीयः
सामान्यस्यानन्तर्भाविताश्रयस्य प्रत्येतुमशक्यत्वात् प्रागेव तत्सिद्धेः।
नापि चतुर्थः तद्धि प्रतीयमानविरोधिव्यतिरिक्तत्वमन्यद्वा स्यात्।
नान्त्यः तत्प्रतीतौ सामर्थ्यानुपदर्शनेनानियमप्रसङ्गात्। न प्रथमः
अनुगतानुगतजातिव्यक्ति चाक्षुषाचाक्षुषादिव्यक्ति गन्धादितादात्म्य
वादिनये तदुभयप्रमाणतादात्म्यविषयताव्युदासं विना विरोधासिद्धेः।
तद्गर्भनिकायकस्यैवासिद्धेः तदुभयप्रतीतौ च तदवधारणे प्रागेव
तत्प्रतीत्यर्थापत्त्यनुवादकतापत्तेः।

योग्यानुपलम्भोऽभावप्रमाकरणमित्यप्ययुक्तं प्रमाणाभावस्य तथा-
त्वे भ्रमानुदयप्रसङ्गात्। उपलम्भाभावमात्रस्य तथात्वे शङ्खधवलिम-
प्रतिसन्धानवतः पीतभ्रमानुदयप्रसङ्गात्। कालभेदात्तन्नाविरोधइति

चेन्न तथापि संसृष्टयोरन्योन्याभावाग्रहणाप्रसङ्गात् तादात्म्यस्य स्वरूपमात्रानतिरेकात् अभावस्फुरणे च तत्प्रतिभासस्य ध्रौव्यात् । किञ्च योग्यता हि तत्तदविनाभूतान्यप्रतियोगिप्रमापकसाकल्यमिष्यते तथा सति च यत्र भावोपलम्भ स्तत्राप्यभावप्रमा स्यात् । नहि तत्र हेतुव्यतिरेकेणैव वा सत्येव वा तदभावप्रमोत्पद्यते । तत्तदविनाभूतविरहसहितः स तथेति चेन्न तदविनाभूतव्यतिरेकस्य तद्व्यतिरेकेणैवान्यथासिद्धसन्निधेरपि हेतुत्वाङ्गीकारे प्रमाणाभावात् । अतएवालोकस्याध्यक्षे आलोकान्तरवत्तावयवेनावयविना वा आलोकेनान्यथासिद्धसन्निधिरहेतुरित्यालोकाभावग्रहे सा नापेक्ष्यते । अर्थासंयोगस्तु नार्थं व्याप्नोऽप्रतत्वैक्यात् तद्विरहसहितः स तथेति चेन्न इन्द्रियसन्निकर्षस्य हि प्रतियोग्यनुपलम्भे तावद्धेतुताङ्गीक्रियते तत्र किं सन्निकर्षव्यतिरेकेकार्य्यान्वयोदाहरणमेष्टव्यं नवा न यदि तदा सन्निकर्षस्य हेतुत्वैव कुतोमन्तव्याऽन्यथैव कार्य्योत्पत्त्युपपत्तेः । एष्टव्यञ्चेत्तर्हि तत्रैवोदाहरणे व्यवधायकेनेन्द्रियसन्निकर्षशून्ये परमार्थतस्त्वाभाववत्युक्तकारणसम्पत्तेरभावप्रमा स्यात् । अत्र व्यवधायकाभावः प्रतियोग्युपलम्भको नास्तीति चेन्न सन्निकर्षव्यतिरेकस्य प्रमाव्यतिरेकप्रयोजकत्वावधारणोदाहरणमेव तर्हि तन्न स्यात् । व्यवधायकस्य सन्निकर्षविरोधेनैव प्रमाविरोधित्वमिति चेत् तर्हि व्यवधायकाभावः सन्निकर्षोत्पत्तौ कारणं न त्वभावप्रमाविशेषोत्पत्ताविति स्थिते स प्रसङ्गस्तदवस्थएव । नच सन्निकर्षाभावादेव तदानीमुक्तकारणासम्पत्तिः प्रतियोगिसन्निकर्षस्याभावप्रमोत्पादकत्वे नित्यं तदनुत्पत्त्यापत्तेः । अतएव नाव्यवधानमधिकं कारणमेष्टव्यमिन्द्रियसन्निकर्षएव तदुपपत्तेः । न चाश्रयसाक्षात्कारोऽपि प्राङ्गस्थिताग्रहादौ व्यभिचारात् । ननु व्यवधायकसद्भावेपि यत्र परमार्थतोऽस्त्यभाव स्तत्रोक्तकारणादभावावधारणमस्त्येव को विरोधो न तावद्भावयोमिथ्यापि तावता तद्विरहप्रमा प्रसज्येत । तर्हि प्रतियोग्यभावसहितो ऽनुपलम्भएवाभावप्रमाणमस्तु यतोहि

योग्यताविशेषणनिवेशनव्यसनम्। योग्यताविशेषणाप्रक्षेपेऽनुपलम्भ-
मात्रतो वस्तुमत्या प्रतियोग्यभाववत्यपि नाभावनिश्चयः कदाचित्
संशयो जायते तत्कथं तथाङ्गीक्रियतइति चेत् तर्हि व्यवधानेप्येवमेवेति
योग्यताविशेषणाप्रक्षेपेपि तुल्यम्। अपि च मेयस्य वास्तवं सत्त्वं
प्रमाणकोटावनिवेशार्हमेव मेयवस्तुसत्त्वनिर्द्धारणार्थमेव हि प्रमाणा
प्रमाणविवेचनं विचारकाणाम्। अन्यथानुमाने व्याप्तावुपाधिनिरासा-
यासो व्यर्थः स्यात् व्याप्तपक्षधर्म्मताज्ञानमात्रस्यैव कारणत्वाङ्गीकारेण
सौकर्य्यात्। प्राक्कॢप्तप्रमितौ च यद्यभावप्रमाणतां मन्यसे तर्हि
सा न स्यात्। तदेदानीं जायमानाभावप्रमोत्पत्तावभाववास्तवसत्त्वा-
विरहस्यापीदानीं क्वचित्सम्भवात्। फलविषयकालिकाभावोपलक्षि-
ताञ्जनादेः कारणकोटिनिवेशने विशेषाभावात्। तदुपलक्षितत्वस्यैव
विशेषणस्य विशेषत्वेऽतिप्रसङ्गात्। तथापि सामान्यतो विशेषाभावोऽ
सिद्ध इति चेन्न तस्य सत्त्वे निर्व्वचनापातात्।

अथायमसिद्धो नाम। तथाहि व्याप्तत्वपक्षधर्म्मताभ्यामप्रमितो
ऽसिद्ध इत्यलक्षणं हेत्वाभासान्तराणामपि ह्यसिद्धप्रवेश एवं सति
स्यात्। व्याप्तिं पक्षधर्म्मतां तत्प्रमितिं वा न विरुध्यतां हेतुदोषत्वा-
भावात्। ननु नेदमीदृशं तथाहि केचिद्दोषा व्याप्तिपक्षधर्म्मतातत्
प्रमितिविरहात्मानः केचित्तु व्याप्त्यादिलिङ्गभङ्गभूताः प्रतिबन्धक-
तया प्रमित्युत्पत्तिं विरुन्धानाश्च केचिद्दोषभूयं भजन्ते। तत्र प्रथमे
तावदसिद्धमध्यमध्यासते। तद्यथा व्याप्यत्वासिद्धः सोपाधिरूपः।
सोपाधिकसम्बन्धिता हि व्याप्तिः सोपाधिता वानुपाधिताविरह
रूपैव एवमधिकरणासिद्धिरप्यसिद्धावेवान्तर्भविष्णुः। पक्षपदोपा-
त्तस्यान्वयस्य व्यतिरेकरूपा हि सा सिद्धसाधनमपि तथैव सिषा-
धयिषितधर्म्मविशिष्टो हि धर्म्मी पक्ष उच्यते। यत्र सिद्धं न तत्र
सिषाधयिषास्ति ततो विशेषणाभावापत्तौ विशिष्टस्य पक्षरूपस्य
तथाभावः। तत्र बाधं यथा सव्यभिचारत्वाद्भ्रमव्याप्तिकमिति एवमेव

सव्यभिचारस्य दूषकत्वं यथासिद्धत्वात्तत्र सिषाधयिषा नास्तीति
सिद्धत्वस्यापि पृथगेव दोषत्वं प्राप्नोति लिङ्गद्वारेणासिद्धिपर्य्यव-
सायित्वात्। अन्यथा व्याप्त्यादिविरहपर्य्यवसायितामात्रेण सव्यभि-
चारत्वादीनामप्यसिद्धावेवान्तर्भावः स्यादिति। यतः सिषाधयिषा
भावो न प्रतिपन्नासिद्धत्वालिङ्गाद्गम्यते। किं नामेच्छाभावस्य तस्य
तस्य यथादर्शनं प्रत्यक्षादेरेवाधिगम इच्छैव तु तत्र यत्रास्ति तत्र
सिद्धत्वं प्रयोजकमित्येतावन्मात्रेण सिद्धत्वमुपन्यस्यते सिद्धसाधने तदि-
च्छाभावमनुमातुं लिङ्गतयेति एवं स्वरूपासिद्धिरपि पक्षधर्म्मताविरह-
रूपैव। ये तु व्याप्तिपक्षधर्म्मताविरहलिङ्गभूतास्तेऽसिद्धतः पृथगेव
हेत्वाभासाः। तद्यथा विरुद्धः साध्यविपरीतव्याप्तः तत्र साध्यव्यतिरेक
व्याप्तता हेतोर्न साध्यव्याप्तताभावः। किन्नाम साध्यव्यतिरेकेण सहानौ-
पाधिकसम्बन्धोऽन्य एवासौ इत्थमेव पक्षधर्म्मताविरहात्मापि नायम्।
किन्नाम ततः साध्यव्यतिरेकेण सह निरुपाधित्वसम्बन्धात् तत्र साध्य
व्याप्तिरस्य नास्तीत्यनुमीयते। तथा सति च साध्यव्याप्तिव्यतिरेकलिङ्गं
सद्विरुद्धः पृथगेव हेत्वाभासो भवति। एवमनैकान्तिकोऽपि न व्याप्ति
व्यतिरेकरूपः किन्तु तल्लिङ्गमेव। तथाहि हेतोरन्वयस्य व्यतिरेकस्य
वा व्यभिचारो न साध्यसाधनव्याप्तिविरहात्मा किन्नाम व्यभिचारो
हेतोः साध्यव्याप्तिविरहं विना न सम्भवतीति लिङ्गभावेन व्याप्ति-
भङ्गं बोधयति। यदि हि निरुपाधिः साध्येन सम्बन्धोऽस्य भवेत्कथं
व्यभिचरितुं शक्नुयात्। तस्माद्व्याप्तिविरहलिङ्गं व्यभिचारो न तु
व्याप्तिविरहः पक्षधर्म्मताविरहरूपता त्वनैकान्तिकस्यासम्भावितैव सत्
प्रतिपक्षतायाश्चानवगम्यमानविशेषप्रतिपक्षप्रतिरुद्धतया यत्साध्यनि-
श्चयाजनकत्वं हेतोः स प्रतिबन्धकसद्भावे कार्य्याजनकत्वमितरकारणस्य
साधारणो वस्तुस्वभावः। तस्य व्याप्तिपक्षधर्म्मताविरहरूपता असं-
भावितैव। बाधस्तु साधनवति पक्षे साध्याभावबोधनात्मा भवन्नपि

न व्याप्तिविरहोद्भावनमन्यः । सामान्यतोऽनौपाधिकसम्बन्धरूपा हि व्याप्तिः । साधनवति च साध्यविरहो न सोपाधिता साध्याविरोधिस्वभावत्वात्तस्याः । नाप्यसौ सामान्यतः साध्यसाधनसम्बन्धस्य विरहरूपः बाधे सत्यपि सामान्येन साध्यसाधनयोः सम्बन्धस्य दृष्टान्तावगतस्यानपलापात् बाधस्य किञ्चिद्विशेषविषयत्वात् सामान्याकारपरिगृहीतस्य सम्बन्धस्य विशेषान्तरमादाय पर्य्यवसानाविरोधात् । तस्माद्विशेषबाधे न सामान्यतः सम्बन्धस्य सोपाधिता अनुमीयते निरुपाधित्वे बाधानुपपत्तेः । यथाह बाधात्सोपाधिरनुमीयतेऽन्यथा वेति न कश्चिद्विशेषइति । अन्यस्तु सत्प्रतिपक्षवद्बाधस्यापि प्रतिबन्धकत्वमेव तेन बाधे सति प्रतिबद्धत्वान्निश्चयं न करोति हेतुरिति व्याप्तिपक्षधर्मतादोषमनालोच्य अन्यथैव बाधस्य दोषत्वमित्याह । तस्माद्व्याप्तिपक्षधर्म्मता प्रमितत्वानां यत्र साक्षादेव विरहस्योद्भावनं तत्रासिद्धः । यत्र तु व्याप्त्यादिविरहलिङ्गोपन्यासः सत्प्रतिपक्षोपन्यासो वा तत्रान्यो हेत्वाभासः । ननु सोपाधित्वादयोऽपि यतोऽवसीयन्ते तत् कुतः पृथक्दूषणं न भवत्यनैकान्तिकत्वादिवत् । मैवम् । अनैकान्तिकत्वादेर्व्याप्त्यादिविरहबोधने लिङ्गभावनियमात् पृथगुपन्यासः । सोपाधितादेस्तु प्रत्यक्षादपि प्रतीतेर्न लिङ्गभावनियतं तत्र प्रतिपादकं किञ्चिदस्ति । न च वाच्यं यत्र लिङ्गात्सोपाधितादेः प्रतीतिरतीन्द्रियप्रभृतिविषये तत्र लिङ्गं पृथगेव दूषणतयाभिधीयताम् । तस्मादनैकान्तिकत्वादिकमपि सार्व्वत्रिकं व्याप्तिविरहलिङ्गमिति हेत्वाभासाधिक्यमापन्नमिति । अनैकान्तिकत्वादिवत्तेषां लिङ्गानामैकरूप्येण निर्द्देष्टुमशक्यत्वात् पृथक् पृथगेव वाभिधानमशक्यमपरिसङ्ख्येयत्वादिति । वक्ष्याम श्चात्रे हेतुं तदनभिधानस्य । यन्त्वनुचितमुच्यते व्याप्त्यादिविरहलिङ्गतयानैकान्तिकत्वादीनां पृथक्दूषणत्वमिति यतो व्याप्तिपक्षधर्म्मतोपेतलिङ्गप्रमितिस्साध्यानुमितिरेकरूपान्न भवेत् । यतश्च सा न भवति तदेव तस्यां दूषणं वक्तुं युक्तमिदमनुमित्युत्पत्तिवारकमिह

नास्तीति । नच व्याप्तिपक्षधर्म्मते तत्प्रमितिश्च विषयास्तदुत्पत्ति-
कारणमस्ति व्यतिरेकोपदर्शनयोग्यं तस्मादनुमितिदोषप्रतीतिकारण-
त्वमनैकान्तिकत्वादीनां नतु साक्षाद्दोषत्वं दोषप्रतिपादकत्वमपि च
दोषत्वं साक्षाद्दोषत्वमनुपजीव्याशक्याभिधानमिति प्रधानदोषस्यैव
दोषतयोद्भावनं युक्तं न सव्यभिचारत्वादीनामिति विभागसूत्रमन-
र्थकमिति तात्पर्य्यं सत्यमेतत् । साक्षाद्दोषत्वं प्रतिबन्धकस्य व्याप्त्यादि
विरहस्य वा विरुद्धत्वादीनान्तु तदनुमापकतया यद्यपि दोषपक्ष-
निक्षेपस्तथापि विरुद्धत्वादेर्यद्दोषप्रतिपादकतयोक्ता तदुद्भावन-
लाघवानुरोधात् व्याप्त्यादिविरहे तथोद्भाव्यमाने न हेतुर्भंक्तुं शक्यते ।
अनैकान्तिकत्वादौ तूद्भाविते व्याप्त्यादिविरहोऽर्थाद्गम्यते । व्याप्त्या-
दिविरहव्यतिरेकेणानैकान्तिकत्वादेरनुपपन्नत्वात् । यथा तस्माद्दीर्घो-
ऽयमित्युक्ते अस्मात् ह्रस्वः स इत्यर्थाद्गम्यते नतु तत्र प्रतिपाद्या-
न्तरापेक्षा तथेहापि निरग्नौ धूमोऽस्तीति प्रतिपादिते अग्निनासौ न
व्याप्त इत्यर्थाद्गम्यते । नहि सम्भवत्यग्निना च व्याप्तोऽनग्नौ चास्तीति ।
अतएवानन्यादतीन्द्रियोपाध्यादिलिङ्गानां येषां पूर्व्वमनभिधानं स-
मर्थितं तेषामनभिधाने अयमपि हेतुः । तानि ह्युपाधिलिङ्गानि
नार्थवशादुपाधिमनपेक्ष्यापि गमयन्ति येन तेषां व्याप्तिर्नावधारिता
तं प्रति तत्प्रतिपादनमन्तरेणाप्रतिपादकत्वस्यापि सम्भवात् । अनै-
कान्तिकत्वाद्यवगतौ च व्याप्त्यादिविरहबोधाय न प्रतिपादनीया-
न्तरापेक्षा कस्यचित्सचेतसः सम्भवतीति पूर्व्वपक्षसंक्षेपः । एवमसिद्ध
लक्षणे व्यवस्थिते बाधोऽयमभिधीयते । एतेन बीजमसिद्धलक्षणं
व्यवस्थापितमायुष्मता भवति । व्याप्तत्वपक्षधर्म्मताभ्यामप्रमितोऽसिद्ध
इति तावत् विरुद्धादिषु लक्षणं किमस्ति किं नास्ति । यदि नास्ति
तदा व्याप्तिपक्षधर्म्मताभ्यां प्रमिता विरुद्धादयः प्राप्नुवन्ति । अथास्ति
तदा तेऽप्यसिद्धभेदाः प्राप्ताः । अथैतल्लक्षणके सत्यपि तेऽसिद्धान्त-
र्भूताः तर्हि अतिव्याप्तमिदमसिद्धलक्षणमापन्नम् । अथ यत्र व्याप्तिपक्षधर्म्म

व्याप्तमितत्वं साक्षादुद्भाव्यते तदसिद्धमित्युच्यते तर्हि लक्षणान्तरमिद
मुक्तं स्यात्। नचैतदपि युक्तं यत्र व्याप्यत्वासिद्धेर्व्याप्तिविरहमात्रं
प्रतिपाद्यते तत्र व्याप्तिपक्षधर्म्मताप्रमितत्वानां त्रयं मिलितं नोद्भाव्यत
इति व्याप्यत्वासिद्धः स्यात्। एवं सर्व्वासिद्धविशेषमुदाहृत्य प्रसङ्गो
विधातव्यः। अथ प्रत्येकमिदं लक्षणं व्याप्तप्रमितत्वया साक्षादुद्भाव्यो
ऽसिद्धः पक्षधर्म्मत्वाप्रमिततया वेति। तर्हि अन्योन्योदाहरणाव्याप्ते
रव्यापकत्वमुभयोः। अथोभयोरप्यसिद्धविशेषलक्षणत्वादन्योन्यविष-
याव्यापकता न दोषायेति मन्यसे न सामान्यलक्षणे निर्व्वक्तुमशक्ये
कथमिदं विशेषलक्षणमपि घटते। अथानुमितेरसाधारणहेतुव्यति-
रेकोद्भावनं सामान्यलक्षणमस्तु। मैवम्। सत्प्रतिपक्षोद्भावनं तथैव्याति-
व्याप्तेः भावरूपतया हेतुविशेषणे च निरुपाधि[illegible]व्यतिरेकोद्भावनाव्याप्तेः
स्वरूपासिद्धिः सर्व्वप्रमाणसाधारणो दोष इत्यत्र तदुद्भावनाव्याप्तेश्च।
अथोच्यते व्याप्तत्वपक्षधर्म्मत्वाभ्यां प्रमितत्वव्यतिरेको यत्र साक्षादुप-
न्यस्यते सोऽसिद्ध इति इदमप्यलक्षणमव्यापकत्वात्। यत्र व्याप्त्यादि
व्यतिरेक उपन्यस्यते तत्र वस्तुगत्या व्याप्तत्वप्रमितेर्व्यतिरेकोऽस्तु नाम
स तूपन्यस्यतेऽपिप्रयोजनाभावात्। व्याप्तिव्यतिरेकदर्शनादेवानुमानाङ्ग
वैकल्यात्मनो दोषस्योद्भावनपर्य्यवसानात्। तस्मात्तत्र प्रमितत्वव्यति-
रेकोद्भावनं नास्तीत्यव्यापकत्वं दोषः। ननु विशेषणाद्यभावेपि वस्तु-
तो विशिष्टाभावएवेति नोक्तदोषः न यदि विशेषणाद्यधिकोविशिष्ट
स्तदा तदभावभेदोपि स्यात्। अथ नाधिकस्तदा विशेषणाभावता
प्राप्ता सा विशिष्टाभावतेति। विशिष्ट्याभावस्यापि तथात्वे पृथगेव
विशिष्टाभावतार्थवत्तयोरित्यननुगमएव सार्थानुमित्यसिद्धाव्याप्तिश्चा-
नुद्भावनादिति। अथ ब्रूषे यत्र व्याप्तत्वपक्षधर्म्मत्वप्रमितेर्व्यतिरेकः
साक्षात्कण्ठोपन्यास स्तदसिद्धं प्रश्नोपन्यासतस्त्वनुपन्यस्तेपि सम्भवा
न्नाव्यापकतेति। नैतदपि युक्तं तथाहि प्रश्नोपन्यासत्वं किं प्रश्न
स्वरूपनिर्द्देशनमात्रम् उत प्रश्नप्रमापकत्वम्। आद्येऽनैकान्तिकाद

पि व्याप्तिशून्यत्वं वाक्यप्रतिपन्नमेव । द्वितीयेऽपि यदि साक्षादिति
प्रत्यक्षेणेत्यर्थः तदा प्रत्यक्षेण प्रमापणीयत्वं व्याप्तिपक्षधर्म्मताप्रमिति
विरहस्य प्रत्यक्षप्रतियोगिकाभावप्रत्यक्षतावादिमते विरुद्धादावप्यव्यक्ती
त्यतिव्याप्तिः । अन्यमते न क्वचिदपीति सर्व्वाव्याप्तिः । अथ व्याप्तिपक्ष
धर्म्मताविरहस्यापि प्रत्यक्षप्रमापणीयता विवक्षिता सा न युक्ता उक्त
लक्षणवाक्यस्य व्याप्तिपक्षधर्म्मताविरहानभिधायित्वात् तद्विरहेऽपि
तात्पर्य्याभ्युपगमे प्रत्येकसमुदितलक्षणस्याविवक्षितेनाव्यापकत्वापातात् ।
अतीन्द्रियपक्षादिविरहे च विषये तदभावादव्यापकत्वापत्तेः । एतेन
यदि लिङ्गानपेक्षत्वं साक्षादर्थः सोऽपि निरस्तः । अथोच्यते यच
व्याप्तत्वपक्षधर्म्मत्वप्रमितेर्व्यतिरेकः प्रतिपादनीयान्तरानपेक्षतया तत्
प्रमापकस्य लिङ्गस्योपन्यासव्यतिरेकेण पक्षोद्भावनः तदसिद्धमिति
नैतदप्युपपन्नम् अतिव्यापकत्वात् तथाहि विरुद्धादौ प्रयुक्ते तावद्विपक्ष
वृत्तिदर्शकभूततर्काभावात् सोपाधितावगन्तुम् । यदाह यत्रानुकूल
तर्को नास्ति सोऽप्रयोजक इति तस्मात्तेषामप्येवं लक्षणयोगित्वाद-
सिद्धत्वप्रसङ्गः नच तादृशतर्काविषयत्वमपि प्रतिपादनीयान्तरान-
पेक्षव्याप्तिपक्षधर्म्मताप्रमितिविरहप्रमापकलिङ्गभूतमेवेति वाच्यं तथा
सति विरुद्धत्वादिवत्तस्य हेत्वाभासान्तरत्वप्रसङ्गात् । अथोच्यते
तयोपन्यस्यमानं तदसिद्धमस्तु साध्यविपरीतव्याप्त्यादिना तु दृश्य-
मानं विरुद्धाद्येव तत् उपन्यासप्रकारभेदाच्च भेदव्यवस्था हेत्वाभासा
नाम् । नत्वत्र गोत्वाश्वत्वादिवदत्यन्तासङ्करइष्यते । किं नाम प्रमाण
प्रमेयभाववत् प्रकारासङ्करमात्रमिति तदप्ययुक्ताभिधानं सुवर्त्तं हि
येन प्रकारेणासिद्धत्वमभवति न तावदुक्तलक्षणेन तथा पक्षोद्भावन
त्वस्य विरुद्धोचितप्रकारेणोपन्यस्यमानस्य सम्भवात् । सर्व्वथा निष्प्र-
प्रकारस्यासिद्धधर्म्मिकत्वतदुद्भावनाप्रसक्तत्वात् । नच तथा पक्षोद्भावन-
त्वमप्युद्भाव्यते असिद्धे येन प्रकारभेदव्यवस्थितिरनेन भवेत् । नच
पक्षोद्भावनपदस्थाने उद्भाव्यमानत्वमिति कृते विचारः सोपाधित्वाद्यु-

द्भावने प्रमितव्यभावोद्भावनं व्यर्थत्वान्न क्रियतइति तदव्यापकत्वं प्रसज्य-
तेति प्रागेवोक्तत्वादिति। एतेनासिद्धः साध्यसमइति प्रत्युक्तं यथाकथ
ञ्चित्साध्यव्याप्यस्य सर्व्वसाधारणत्वात् साध्यविशेषस्य चोक्तप्रकारपर्य्य-
वसानव्यतिरेकेणान्यस्यासम्भवात् पक्षान्तरेषु चोक्तदूषणप्रकारा
यथासम्भवमिह योजनीयाइत्यलं विस्तरेणेति .

अपिचासिद्धपक्षत्वविशेषणेन प्रमाणाव्यवच्छेदकव्यतिरिक्तेन यद्य
वच्छेद्यं किं तत्केनचिदिरुद्धं [illegible]नचिदन्यदिति चेत्। विरुद्धमेव कि
मुच्यते तथाहि साध्यविपरीतव्याप्तो विरुद्धइत्याहुः तत्र साध्यव्यतिरे
केण हि व्याप्तिः कार्त्स्न्येन वा अनौपाधिको वा स्वाभाविको वा सम्बन्ध
इत्याद्युक्तिभिः सविशेषणः सहभावएव निरुच्यते। तथा सति च
साध्यव्यतिरेकेण सामानाधिकरण्यमेव विशेषणविशेष्ययुक्तं विरुद्ध-
मित्युक्तं स्यात्। यदा चैवं तदा साध्यव्यतिरेकसामानाधिकरण्यमेव
हेतोरगमकत्वे समर्थमिति तन्मात्रमुद्भाव्यं वृथा विशेषणप्रक्षेपः। तथा
चानैकान्तिकएवायं स्यात्। ननु साध्यव्यतिरेकसम्बन्धो यद्यपि विरुद्धा
नैकान्तिकयोर्द्वयोरप्यस्ति तथापि वस्तुगत्या स्वाभाविकोऽसौ विरुद्ध
एवेत्येतावन्मात्रविशेषविवक्षया विरुद्धस्यानैकान्तिकाद्भेदोपन्यासः।
मैवम्। दत्तोत्तरत्वात् वस्तुगत्या सन्नप्ययं विशेषोनोद्भावनार्हइत्यु-
पेक्षणीयइत्युक्तम्। तथाहि नेदमस्य साधकमेतत्साध्यं प्रति विरुद्ध-
त्वादित्यभिधीयमाने विरुद्धशब्दार्थनिरुक्तौ विशेषणाधिक्यस्योक्तन्या-
येन दुष्परिहरत्वात्। अतएवानैकान्तिके सन्देहेन प्रत्यवस्थानं विरुद्धे
तु व्यतिरेकनिश्चयेनेति विशेषादनयोर्भेदेनोपन्यासइत्यप्यनवकाशम्
अनुमितिहेतुव्यतिरेकोहि हेतुदोषोऽनुमितिहेतुश्चैको व्याप्तिस्तत्तद
भावस्य दोषत्वात्तावन्मात्रं वाच्यं तच्च हेतुविपक्षसम्बन्धोद्भावनमात्रा
देव गम्यते तस्मादनुमितिहेतुव्याप्तिप्रमितिव्यतिरेकसाधनाय संशये
व्यतिरेकनिश्चये वोद्भाव्यमानेऽपि कुतस्तावेवोच्येते विपक्षसम्बन्धमात्र
नियततत्सम्बन्धावच्छेदोपन्यासाविति तत्सम्बन्धमात्रमेवास्तु व्याप्तेस्तत्र-

मितेश्च व्यतिरेकस्य लिङ्गत्वादुक्तार्थं ज्ञातमितराभ्यामिति लकारभेद
प्रयोगे तैस्तैर्लकारैः कालविषयविशेषप्रतिपादनवद्विभक्तिभिर्लिङ्ग
संख्याज्ञापनवत् पर्व्वतोऽग्निमानित्यादौ धर्म्मादिप्रतिपादनवच्च नेदं
घटते तत्र तेषामतात्पर्य्यविषयाणामपि पदप्रयोगे विशिष्टबोधने वा
अन्यथासिद्धानां यथाबोधनं तथा यत्रापि व्याप्तेर्व्विशेषणानामतात्-
पर्य्यविषयत्वं तदानैकान्तिकसाधारण्यादेव अन्यथोक्तदोषापरिहा-
रादेवेति । अनैकान्तिकत्वस्यानुद्भावयता अनधिगच्छता वा निरवद्यम-
शक्योद्भावनमशक्याधिगमश्चेति तदुपजीवित्वाच्च पृथग्दूषणं विशेष्य
प्रतिपादनं विशेष्यावगमश्च विना विशिष्टप्रतिपादनस्य विशिष्टावगमस्य
वा अशक्यत्वात् एवमन्यत्रापि विशेषणस्याप्रयोजकता विशेष्यस्य सा-
मर्थ्यं स्वयमूहनीया । यथा इदमसाधकं साधारणानैकान्तिकत्वादि
त्यत्र साधारणेति विशेषणं सपक्षविपक्षगतत्वादित्यत्र सपक्षगतत्वेऽप्यु-
द्भाव्यमाने एवमसाधारणेऽपीति इदमसाधकं जातित्वादिति जातित्व
विवेचने स्वव्याघातकमुत्तरं जातिरिति स्वव्याघातकत्वस्यैव सर्व्वमसत्
ज्ञेयत्वादित्याद्यजातिजातिसाधारणस्य दूषणसमर्थत्वेनोत्तरत्वाभि-
धानहति । किञ्च साध्यविपरीतेति साध्याभावेत्यर्थे यदा अभावात्मैव
साध्यः क्वचिद्भवति तत्र तद्विपरीतस्य भावत्वात्तद्व्यापकत्वं लक्षणस्य ।
नच विपरीतशब्दस्य विरोधिमात्रार्थत्वे भावाभावोभयव्याप्तिरिति
वाच्यं सहानवस्थानं हि भावाभावयोर्व्विरोधोऽभ्युपेयते अनवस्थानञ्च
संसर्गानिषेधः स च भावाभावयोरन्योन्यस्यावस्थानमेव । परस्परप्रति
षेधरूपत्वात्तयोः तथा च सति भावाभावयोः स्वरूपस्यानुपसंग्रहे
प्रत्येकमव्याप्तिर्न्निश्चितस्यासम्भवस्यैवेति । वक्ष्यामश्च भावाभावयोर्वि-
रोधनिरुक्तिनिराकरणमुपरिष्टादिति ।

किञ्च व्याप्तपदेन लक्षणप्रविष्टेन किं व्यवच्छेद्यम् अनैकान्तिकमिति
चेत् किं तदनैकान्तिकं तथाहि । अनैकान्तिकः सव्यभिचारस्तल्लक्ष-
णम् सव्यभिचारत्वं हि यदि विपक्षवर्त्तिता तदानीं विरुद्धेपि प्रसङ्गः

असाधारणानैकान्तिकाव्याप्तिश्च । अथ सपक्षविपक्षगताभावता तदा साधारणोदाहरणाव्यापकत्वम् । अथोच्यते सव्यभिचारत्वं सपक्ष विपक्षसाधारणता अभिप्रेता सा चान्वयेन साधारणस्य व्यतिरेकेणा साधारणस्यानैकान्तिकस्य संग्राहिका सपक्षविपक्षसाधारणतामात्रं त्वन्वयेन व्यतिरेकेण वेति विशेषणतया न विवक्षिता अतः साधारणा साधारणानैकान्तिकयोरुभयोरपि संग्रहः । विवादाध्यासितं क्षणिकं सत्त्वादित्यादेरनुपसंहार्यस्यापि सपक्षविपक्षशून्यत्वादेव सपक्षविपक्ष गतत्वाभावेन साम्यमिति । विचार्य्यमेतद्व्याख्यानं परमस्तु तावदाधा- नतः तथापि व्यतिरेकेण सपक्षसाधारणतायाः सपक्षाव्यापके सद्धेतौ धूमविशेषादौ गतत्वेनातिव्यापकत्वं यदि तस्य दोषस्य परिहारार्थं सर्व्वविपक्षसपक्षसाधारणमनैकान्तिकमिति ब्रूषे । तदा व्यतिरेक मात्रेण सर्व्वसपक्षविपक्षसाधारणता धूमानुमानादिगामिनी न भवतु नाम । अन्वयेन तु सर्व्वसपक्षविपक्षसाधारणता विपक्षसपक्षैकदेश गामिनं साधारणमनैकान्तिकं शब्दो न नित्यः प्रयत्नानन्तरीयकत्वादि- त्यादिकं न संगृह्णातीत्यव्याप्तिरित्येकं सन्धित्सतोऽपरं प्रच्यवते । अपि चान्वयव्यतिरेकाभ्यां सर्व्वसपक्षविपक्षगतत्वाद्धूमानुमानादौ सैव प्रसक्तिः विशेषरूपेण तयोरविवक्षितत्वात् । किञ्च सर्व्वसपक्षविपक्ष साधारणमनैकान्तिकमिति वाक्ये यदि सर्व्वेति विपक्षस्यापि विशेषणं तदा विपक्षैकदेशवृत्तेः सपक्षव्यापिनः साधारणानैकान्तिकस्य असरेणुः कार्य्यावयवकोमहत्त्वात् घटवदित्यादेरव्यापकं लक्षणमिदम् । अथ सर्व्वेति न विपक्षस्य विशेषणं तदा व्यतिरेकमादाय विपक्षसर्व्वसपक्ष साधारणमनैकान्तिकमिति एतद्विपक्षैकदेशमात्रवृत्तौ विरुद्धे क्षिति र्नित्या सावयवत्वादित्यादौ गतत्वादतिव्यापकमिति । का चेयं वाचो- युक्तिः सपक्षविपक्षसाधारणमनैकान्तिकमित्युक्ते सर्व्वं संगृह्यते अन्व- येन व्यतिरेकेण वेति कथमनुपसंहार्य्यस्यासत्सपक्षविपक्षस्य सपक्षे वि- पक्षे वा अन्वयेन व्यतिरेकेण वा साधारण्यं स्यात्तयोरेवाभावात् । यदि

च सपक्षे च विपक्षे च साधारणत्वमुभयत्र सत्त्वमात्रमेव विवक्षितं
स्तदानीमसाधारणानैकान्तिकाव्याप्तिः । अथोभयस्मिंस्तस्मिन्नसत्त्वं
तद्विवक्षितं तदा सर्व्वाव्याप्तिः तदसत्त्वस्यातद्धर्मत्वात् । अथ तदुभय-
वृत्त्यभावप्रतियोगित्वं तदुभयसम्बन्धस्य योऽभावस्तदाश्रयत्वं वाभि-
प्रेतं तदापि साधारणोदाहरणाव्याप्तिः । अथ मन्यसे तदुभयसाधा-
रण्यं नाम एकस्मिंस्तादृश्यं हेतोः सत्त्वमसत्त्वं वा तादृश्यमपरस्मिन्नपि
यत्तदुच्यते तथा सति नाव्यापकतादोष इति । नैवम् । मुख्यस्यान्वय-
नार्थो नोपपद्यते हेतोरैकरूप्यस्य सपक्षविपक्षावाश्रय इति । किं नामै-
करूप्यवतो हेतोस्तावाश्रयाविति स्यात्तदा चासाधारणाव्याप्तिः तत्र
सपक्षे विपक्षे च हेतोरसत्त्वेन तदाश्रयत्वासम्भवात् । तस्मात् सपक्षे
विपक्षे च साधारणत्वं हेतोरनैकान्तिकत्वमित्यनुपपन्नमेव असत्त्वपक्षे
हेतोस्तदाश्रयकत्वानुपपत्त्या सपक्षे विपक्षे चेति सप्तमीनिर्देशस्या
सङ्गतत्वात् । तदभावापेक्षया चाश्रयत्वस्योपपत्तौ हेतोस्तदाश्रयत्वे
किमायातम् आयातु वा किञ्चित् तथापि साधारणोदाहरणेषु हेत्व-
भावापेक्षया सपक्षविपक्षयोर्नाश्रयता सप्तम्यर्थः किन्तु हेत्वपेक्षयैवेति
एकार्थापर्य्यवसायित्वे वाक्यस्य लक्षणाव्यापकतापत्तिरेव । किञ्च स-
पक्षविपक्षसाधारणत्वं यदि सामान्यतोलक्षणं साधारणासाधारणा
नैकान्तिकभेदद्वयसंग्रहार्थमुच्यते तदा सपक्षविपक्षयोरन्यत्वादिभि-
र्हेतोः साधारण्यमस्त्यन्यत्रापीत्यतिव्याप्तिः । अथातिव्याप्तिपरिजिहीर्ष
यान्वयव्यतिरेकाभ्यां सपक्षविपक्षसाधारणमनैकान्तिकमित्युच्यते तदा
अन्वयव्यतिरेकयोः प्रत्येकमिलितविकल्पानुपपत्त्या अव्यापकत्वापातः ।
स्यादेतत् सत्ताभावविरोधाश्रयाश्रितसपक्षविपक्षत्वं सपक्षविपक्षसा-
धारण्यं विवक्षितमेव नाव्याप्त्यतिव्याप्ती इति तदप्यसत् । तथाप्युक्त
तावत्सर्व्वपदविशेषणोपादानानुपादानपक्षोक्तदोषापातः सत्ताशब्दो-
पादाने धूमानुमानादौ प्रसङ्गश्च । सत्ताभावविरोधपदार्थस्याप्येव-

स्याननुगतस्यासम्भवेन लक्षणाननुगमाभावो दोषः तत्तदभावयोर्हि वि-
रोधः सत्तानवस्थानम् अनवस्थानञ्चावस्थानप्रतिषेधो न च तद्भावस्या
भावस्वरूपादन्यत्। न चाभावस्याप्यनवस्थानं भावस्वरूपादन्यत् किन्तु
तदेव भावस्य स्वरूपं तच्च सत्ताभावविरोधाश्रय इत्यस्य नार्थक्यं किञ्चि-
न्मृग्यमाणमवाप्यते। सत्ताभावविरोधाश्रय इति वचनं विचारमर्हति।
किञ्च सत्ताभावयोर्विरोधविशेषणतया आधेयकोटिनिवेशात् विशे-
षणघटितमूर्त्तत्वादिविशिष्टपदार्थस्य तदाधारत्वानुपपत्तेः अतिव्याप-
कता च स्यात् अन्वयमादाय सपक्षे व्यतिरेकमादाय विपक्षे वर्त्त-
मानस्याप्युभयपक्षापेतत्वात्। सत्ताभावाविशेषितस्य तु विरोधस्या-
श्रयेऽभिधीयमाने सर्व्वानुमानव्यापकत्वमनैकान्तिकलक्षणस्यापतेत्।
न च वाच्यं सत्ताभावोपलक्षितो विरोधोऽभिमतः तेन विशेषणपक्षोक्त-
दोषस्य बाधकाभाव इति यतः सत्ताभावाभ्यां विरोधमात्रं वा लक्ष्यते
तद्व्यक्तिर्वा काचित्। आद्ये यदेव सत्ताभावाभ्यां लक्षितं विरोध-
मात्रं तदेवान्यदपीत्युक्तातिव्याप्तिः तदवस्थैव सत्ताभावपदोपादानवैय-
र्थ्यञ्च। अथ द्वितीयस्तदा लक्षणस्याननुगमः एकस्य विरोधव्यक्ति-
विशेषस्य च परिच्छिन्नस्यापरविरोधव्यक्तेरन्यत्वात्। अथ यावन्तो-
ऽपेक्षिता विरोधव्यक्तयस्ता उपलक्ष्यन्त इत्युच्यते किमेवोपलक्ष्यन्ते किन्नु
किं केनचिदनुगतेन रूपेण उत प्रतिस्वं व्यावृत्तेनात्मना। प्रथमे तदे-
वोच्यतां किमुपलक्षणोपन्यासेन। न च तत्सम्भवति विरोधमात्रस्याति-
प्रसञ्जकत्वात्। प्रतिस्वं व्यावृत्तेन व्यक्तीनामात्मनोपलक्ष्यत्वे तथैव
तासां लक्षणप्रवेश इति मिलितानां लक्षणत्वे सर्व्वाव्याप्तिः प्रत्येक-
लक्षणत्वे परस्परोदाहरणाव्याप्तिः। स्यादेतत् सपक्षएव विपक्षएव
वर्त्तते न यः सोऽनैकान्तिक इति लक्षणमस्तु तेन साधारणासाधारणो-
दाहरणव्याप्तिर्भवतीति तदप्यलक्षणं वह्नौ धूमादावपि गतत्वात्
न ह्यसौ विपक्षएव वर्त्तते सर्व्वथा तत्रावृत्तेः नापि सपक्षएव पक्षेऽपि
वर्त्तमानत्वात्। अथ पक्षवृत्तिरिति विशेषयसि तथापि सद्धेतोरपरि

स्यात् पक्षवृत्तित्वादेव सपक्षएव वृत्तेरभावात् अविद्यानैकान्तिक सङ्ग्राह्याव्याप्तिश्च । अथ पक्षव्यतिरिक्तइति विशेषणं प्रक्षिप्यते तदानी मप्रसक्तव्यावर्त्तनमनुपपन्नं न हि पक्षाद्व्यतिरिक्तः सपक्षोविपक्षो वा सम्भवतीति सपक्षस्य विपक्षस्य च कुतश्चिदव्यावर्त्तनं विशेषणेनेदं तयोः कथं घटते । अथ पक्षव्यतिरिक्ते वर्त्तमानइति विशेषणमिति तदानीमसाधारणाव्याप्तिः नासौ पक्षव्यतिरिक्ते वर्त्तमानः । अथ पक्ष व्यतिरेकेणेति विशेषणमुपादत्से तदापि पक्षव्यतिरेकइति पक्षविरह रूपस्योपाधेर्यत्वं हेतुत्वं वा द्वयमपि पक्षमात्रवृत्तावसाधारणानैका- न्तिकेन सम्भवति पक्षविरहस्य तत्रासम्भवादेव । निषेध्यविशेषणत्वे तस्य सद्धेतौ गमनं स्यात् । एतेन पक्षं विना पक्षमन्तरेणेत्यादिशब्दै- र्विशेषाभिधानमपास्तम् । अथ यदि पक्षव्यतिरिक्ते वर्त्तते तदा स- पक्षएव विपक्षएव न वर्त्तते यः सोऽनैकान्तिकः तथा सत्यसाधारण स्यापि व्याप्तिः । सद्धेतौ चाप्रसक्तिरिति मन्यसे तदा भ्रान्तोऽसितराम् एवं सति नोभयस्यापि संग्रहः । असाधारणे तावद्यदि पक्षव्यतिरिक्ते वर्त्तत इत्येतन्न सम्भवति तस्य पक्षमात्रवृत्तेः कदाचिदपि पक्षव्यतिरिक्त वृत्तिसम्भावनानुपपत्तेः साधारणेपि निश्चितसपक्षविपक्षवृत्तौ यद्यर्थं न पश्यामोयदि पक्षव्यतिरिक्ते वर्त्ततइति नहि निश्चितवृक्षभावायां शिंशपायां प्रयुज्यते यदि शिंशपावृक्षः स्यादिति तत्वस्य हेतोः संश योपस्थापितात्कोटिद्वयादेकस्यां कोटौ तदाश्रये निश्चितधर्मोपदर्शनार्थं मारोप्यमाणायां यदीति प्रयुज्यते । ननु निश्चितएव वस्तुनि तस्मादसा- धारणानैकान्तिकसंग्रहाय यदीत्याद्युपात्तं यत्तन्न साधारणमपि सम- ग्रहीत् । अथ विपक्षएव सपक्षएव वर्त्तते न यो हेत्वाभासः सोऽनैका- न्तिकइति लक्षणं मन्यसे तदप्यनुपपन्नम् अनैकान्तिकत्वमनिश्चित्यापत एवहेत्वाभासत्वावधारणे ततएव हेतोरसाधकत्वं सिद्धमिति कृतं तदु पजीविनानैकान्तिकत्वोपन्यासेन । अथान्ये हेत्वाभासत्वं नावधार्यते तदा लक्षणस्य दुरवधारणत्वं विशेषणस्य हेत्वाभासत्वस्याज्ञायमाने

अथ ब्रूषे असिद्धविरुद्धप्रकरणसमकालात्ययापदिष्टादन्यो हेत्वाभा-
सोऽनैकान्तिक इति तदाप्युक्तन्यायेनैव निरस्तम्। किञ्चैवमसिद्धादिस-
ङ्कीर्णस्यानैकान्तिकस्य न संग्रहः स्यात्। नच तदसिद्धादित्वादेवा-
हेतुर्भविष्यतीति वाच्यम् तथानैकान्तिकत्वविपक्षगतत्वादिनाप्युद्भावने
दोषत्वसम्भवात्। अथ मन्यसे साधारणत्वासाधारणत्वयोर्व्यतिरेका-
भ्यां मिलिताभ्यां विशिष्टादन्यत्वं साधारणासाधारणानैकान्तिकस्यापि
सामान्यलक्षणमस्तु। नैवम्। यदि व्यतिरेकद्वयविशिष्टादन्यत्वं तर्हि
तस्य विशिष्टस्य विशेष्ये विशेषणे च इदमस्तीत्यतिव्याप्तेः। यदि व्यति
रेकद्वयवत्त्वोपलक्षितं तदोपलक्ष्यस्वरूपाणां यदि भेदेनैवोपलक्ष्यता
तदा व्यतिरेकाविशिष्टे तदव्याप्तिः। नहि यदेवाविशिष्टं तन्मात्रं वि-
शिष्टम् एवमभेदेनापि भेदाभेदाभ्यां तदेवापि तदिति चेन्न अतदपीति
प्रसक्तादवस्थ्यात् ततोऽत्यन्तान्यत्वं लक्षणमिति चेन्न असिद्धादिसङ्की-
र्णानैकान्तिकोदाहरणाव्यापनात्। स्वरूपाख्यानन्त्ये तत्प्रतियोगि-
कान्यत्वावधारणस्याशक्यता तेषामानन्त्यात् तन्मध्यपतितकतिपयान्यत्वे
चान्यत्र कतिपये प्रसक्तादवस्थ्यात् उपलक्षणत्वे चोभयव्यतिरेक
स्यान्यत्वप्रतियोगिकोटिप्रवेशेन तत्संगृहीतव्यतिरेकपक्षतापातात्। एव
चादृष्टवाक्यादिना गोत्वादिवद्भूतत्वादिविशिष्टत्वानुमानौचित्या-
पातात् हेत्वाभासान्तरमप्येवं किन्न समग्राहीति वासनायां यदेवा-
नयो वैधर्म्यं वाच्यं तस्यैव लक्षणस्य निर्वचनतापत्तेरिति। असिद्ध-
त्वादिप्रकारादन्येन प्रकारेण हेत्वाभासोऽनैकान्तिक इति चेत् वाच्य
तर्हि स प्रकारः कश्चान्यथा ततः तेनाऽन्यत्वं ज्ञेयम्। किञ्चैवं तर्हि
असिद्धादन्यदनैकान्तिकमिति ज्ञात्वा विरुद्धादीनामनैकान्तिकत्वेनैव
संग्रहे प्राप्ते विरुद्धादिरूपान्तरासंग्राह्ययोरेव यदनेन प्रकारेण संग्र
हणकार्यं तच्च नियतं क्वचिदेव भवतो नियन्त्री। यदा च त्वमसिद्धादि-
व्यतिरिक्ततयानैकान्तिकं लक्षयसि तदा असिद्धादिभेदकं प्रकारमनव-
गम्य तद्व्यतिरेकस्याधिगममिति तदभिधाने प्रसक्ते तदाश्रयाये दोषा

दर्शितास्तैः स्मृतिश्रुतिविरुद्धत्वदोषैश्च निराकर्त्तव्योऽस्ति । साध्येना-
व्याप्यत्वे सति तदभावाव्याप्तोऽनैकान्तिक इत्यपि न साध्याविशिष्टेऽपि
गतत्वात् विशेषणीभूतसाध्याव्याप्यत्वावगमाच्च प्राथमिकाद्व्याप्यत्वा-
सिद्धेरेवोपजीव्यत्वाद्दूषणं स्यात् विशेषणांशस्य च वासाधकत्वसाधन
सामर्थ्याद्व्यर्थविशेष्यतापि वस्तुप्रतिव्यापकवन्मात्रपर्य्यवसायिनि तद-
भाववन्मात्रपर्य्यवसायिनि वा तत्राप्यसन्दिह्यमानान्यतरव्यापकत्वे
शब्दोऽनित्यः श्रोत्रविशेषगुणत्वादित्यादावव्याप्यत्वे व्याहतत्वाच्च ।
वस्तुतः साध्याव्याप्ते तत्त्वेऽपि सत्प्रतिपक्षतया अनिर्द्धारितसाध्यव्याप्ति-
के प्रकरणसमे गतत्वाच्च । एवमनैकान्तिकः सव्यभिचार इति प्रयुक्तं
वेदितव्यं सव्यभिचारस्योक्तप्रकाराधिकस्य निर्वक्तुमशक्यत्वादिति ।
अपिचोक्तलक्षणविशेषणेन प्रमाणव्यवच्छेदकादन्येन किं व्यवच्छेद्यं
केनचित्सत्प्रतिपक्षः केनचिदन्य इति चेत्

कः पुनः सत्प्रतिपक्षः । तथाहि सत्प्रतिपक्षलक्षणमनुपपन्नं यथाह
समानबलेन बाधितसाध्यविपर्य्ययकोहेतुत्वेनाभिमतः सत्प्रतिपक्ष इति
तन्न तथाहि किमिह बलं विवक्षितं सामर्थ्यमिति चेत् तत् कुत्र
कार्य्येऽभिमतं न तावत्सर्व्वस्मिन्नेव कार्य्ये सत्प्रतिपक्षहेत्वोर्भिन्नविषय
बुद्ध्यादिजनकतया सर्व्वकार्य्ये समशक्तिकताया असम्भवात् । नापि
यत्र क्वचित् कार्य्ये प्रकृतसाध्यं प्रति प्रतीयमानासिद्धत्वादिदोषेणापि
प्रमेयत्वप्रतिपादनादौ समर्थेन प्रतिहेतुना सत्प्रतिपक्षताप्रसक्त्या सर्व्व
हेतूनां शक्यप्रकरणसमहेत्वाभासत्वापत्तेः । नापि पूर्व्वहेतुसाध्याभाव
बोधनरूपे कार्य्ये उत्तरहेतोरेवमसत्प्रतिपक्षत्वे स्वसाध्यसाधनशक्तेः
प्रतिहेतोरिति चेन्न तत्र सत्प्रतिहेतोरसामर्थ्यादेव समशक्तिकत्वानुप
पत्तेः इत्थमेव न हेतुसाध्यविपर्य्ययबोधनेऽपि । अथोच्यते स्वकीये स्व-
कीये प्रकृतसाध्ये यत्र पक्षसपक्षसत्त्वविपक्षव्यावृत्तत्वाबाधितत्वलक्षणं
सत्प्रतिपक्षहेत्वोस्तुल्यं तदभिप्रायेणेदं समबलाभिधानं तेनेदमुक्तं
भवति पक्षसपक्षसत्त्वविपक्षव्यावृत्तत्वाबाधितविषयत्वैस्तुल्येन बाधित

साध्यव्यतिरेकः सत्प्रतिपक्ष इति नैतदपि युक्तम्। प्रतीयमानभागासि-
द्धत्वेनापि प्रतिहेतुना सत्प्रतिपक्षत्वप्रसङ्गात्। नियत्यपि पक्षे सत्त्वेन
तस्य पक्षसत्त्वभावात्। न चेष्टमेव भागासिद्धेनापि सत्प्रतिपक्षत्वं
प्रतीयमानदोषान्तरेणापि तथा सति सत्प्रतिपक्षत्वस्यैव व्याप्त्यापत्तेः
हेत्वाभासान्तराविशेषात्। न च सर्व्वपक्ष इति रूपे नायं दोष इति
वाच्यं यत्रैकएव पक्षः प्रतिहेतौ तस्य सत्प्रतिपक्षत्वाभावापातात्। तच
पक्षस्य सर्व्वशब्दार्थत्वाभावादेव सर्वपक्षसत्त्वाभावेनोक्तलक्षणानुपपत्तेः
एतेन यावदित्यपि पक्षविशेषणे दोष उक्तप्रायः। किञ्चान्वयव्यतिरे-
किणः केवलव्यतिरेकिणा केवलव्यतिरेकिणश्चान्वयव्यतिरेकिणा सत्-
प्रतिपक्षे लक्षणमिदं नास्ति सपक्षसत्तया तुल्यताया अभावात्।
न च सपक्षसत्तया तुल्यत्वेनेति लक्षणे तदनुरोधात् कर्त्तव्यमेव तथा सत्य
साधारणानैकान्तिकतया निश्चितेनापि सत्प्रतिपक्षत्वप्रसङ्गात्। न चा-
न्वयव्यतिरेकिणोऽन्वयव्यतिरेकिणः केवलव्यतिरेकिणैव केवलव्यतिरे-
किणः सत्प्रतिपक्षता न व्यत्यासेनापीति नियमोऽभ्युपगन्तुं शक्यः उभयो
रप्यनवगम्यमानदोषान्तरत्ववदप्रायमेकसम्बन्धिनो दोषस्यावश्यम्भा-
वितया एकतरस्याप्यस्वपक्षधर्म्मत्वावगमो मे भ्रान्तिरिति बुद्धिमादाय
प्रतिपत्तुर्निश्चयोत्पत्तिप्रतिबन्धमाधातुं केवलव्यतिरेकिणान्वयव्यतिरे-
किणोऽन्वयव्यतिरेकिणा च केवलव्यतिरेकिणः प्रतिहेतोः सामर्थ्यस्य
दुरपवादत्वात् एतदेव तु सत्प्रतिपक्षत्वस्य दोषत्वाभ्युपगमे मूलं यन्नाम
व्याप्तिपक्षधर्मताप्रमितिरस्मिन् सति न भवितुमर्हतीति। अथाभिमते
पक्षसपक्षसत्त्वविपक्षव्यावृत्त्यबाधितविषयत्वयोगिना बाधितसाध्यविप
र्य्ययः सत्प्रतिपक्ष इति न निरस्तप्रायत्वात्। पक्षपदे सर्वशब्दविशेषणा
प्रक्षेपे पक्षोक्तदोषस्य केवलव्यतिरेकव्यापकत्वस्यापि भावात्।
किञ्च सोपाधिमसिद्धभेदं वदतां मते सोपाधिकतया निश्चीयमानेऽपि
सर्व्वं यथोक्तमिदं लक्षणमस्तीति तेनापि सत्प्रतिपक्षता स्यात्। अथ
ब्रूषे अबाधितविरुद्धानैकान्तिकबाधितविषयत्वहीनेन बाधितसाध्या

सत्त्वः प्रकरणसमइति नैतदपि युक्तम् आपाततोऽस्फुरद्दोषेण वस्तु-
गत्या वासिद्ध्यादिदोषवता सत्प्रतिपक्षतास्वीकारात् तदव्यापकत्वात् ।
किञ्च विरुद्धार्थगोचरयोः सत्प्रतिपक्षहेत्वोर्मध्येऽवश्यमन्यतरासिद्ध्या-
दिदोषेण भवितव्यम् अन्यथा धर्म्मिणो विरुद्धधर्म्माध्यासप्रसङ्गात् ।
तत्रैकस्य व्यवच्छेददोषानिश्चयात् प्रतिहेतावप्यसिद्ध्यादिदोषाशङ्कया
मापतितायामसिद्ध्यादिहीनेनेति लक्षणांशस्यानिश्चयात् लक्षणस्य
दुरवधारणत्वम् । न च वाच्यं किमर्थं सत्प्रतिपक्षहेत्वोरन्यतरासिद्ध्या-
दिकमवश्यमभ्युपेयं सत्प्रतिपक्षलक्षणदोषदुष्टत्वादेव तयोर्न धर्म्मिणो
विरुद्धधर्म्माध्यस्तत्वमापत्स्यतइति यतोऽवश्यं दुष्टे हेतौ व्याप्तेः पक्षधर्म्म-
ताया वाभावेन भवितव्यं तत्सत्ताभ्युपगमे साध्यसत्ताया अभ्युपगम-
प्रसङ्गात् । बाधादीनामप्युपाधिस्थापनद्वारा व्याप्त्यादिभङ्गएव पर्य्यव
सानात् । सत्प्रतिपक्षत्वादुन्नीयमानोपि व्याप्तिपक्षधर्म्मताभङ्गो न
विशिष्यैकस्मिन् हेतौ निर्णेतुं शक्यः अन्यतरस्य व्याप्त्यादिभङ्गेनापि
सत्प्रतिपक्षत्वस्योपपत्तेः अतोऽविशेषनिष्टतया तदुभयत्रे स्थिते यदि
साक्षादवधार्य्यते तदानीमसिद्धिः । अथ लिङ्गतोऽनुमीयते तदानैका-
न्तिकादेरन्यतमदूषणं वस्तुगत्यास्ति सत्प्रतिपक्षे तन्मध्यमसिद्ध्याद्यन्य-
तमन्नाभ्युपेयं तच तत्रात्मस्य दोषस्य कुत्र द्वयोर्मध्येऽस्तित्वमस्तीति
अनिर्द्धारणे प्रतिहेतावपि तच्छङ्कायां सत्यामसिद्ध्यादिहीनेनेति लक्ष
णांशस्य दुरवधारणत्वं दुष्परिहरमेव स्यादेतत् । अस्तु लक्षणांशस्या
सिद्ध्यादिहीनत्वस्यानिश्चयः संशयोपि तावदस्ति तत्संशयेन शङ्कितसत्
प्रतिपक्षतादोषग्रस्तत्वादेवासाधकत्वं दूष्यानुमानस्य शङ्कितोपाधिरि
वासिद्धिशङ्कया । न च यामसिद्ध्यादिशङ्कामुपजीव्य सत्प्रतिपक्षतादि
शङ्कादोषः स्यात् सैव तदा दोषइति वाच्यम् असिद्ध्यादिशङ्कायाश्च
तादृशप्रतिहेतुदर्शनमूलकतया तदुपजीव्यत्वादिति । नैवम् । यतः
शङ्कितोपाधिनाऽसिद्धेनाप्येवं सत्प्रतिपक्षता प्रसज्येत । ननु भवत्वेव-
मपि तेन किन्नाम भवेत् तत्संशयितत्वा हीनत्वस्य सिद्ध्यादिकता

पक्षबाधं विधूय न किञ्चिदन्यत् । बाधादेव तर्हि न तेन सत्प्रतिपक्ष-
तेति चेन्न सन्दिग्धासिद्धतया सत्प्रतिपक्षहेतोरपि तर्हि कथं परहेत्व
साधकत्वप्रसाधकत्वं भविष्यति हेत्वाभासत्वाविशेषात् हेत्वाभासा-
न्तरं न दोषसंशयापादकमतोनैवमिति चेन्न तर्हि । यमुपाधिमादाय
न्यूनबलतया बाध्यता, तमादायैव तथापि न उपाधेर्दोषसंशयहेतुमत्त्वा-
देव । किञ्च क्वचित्सत्प्रतिपक्षत्वनिश्चयाभावे संशयानुपपत्तिः । अथान्य-
थाकारं लक्षणमभिधत्से असिद्धविरोधव्यभिचारकालात्ययापदेशवि-
रहिततया प्रतीयमानेन बोधितो यदीयसाध्यस्य विपर्य्ययः स प्रकरण
सम इति एतदपि विचारासहं केन तथा प्रतीयमानत्वमभिमतं किं
प्रत्यनुमानप्रयोक्त्रा अथ प्रथमानुमानवादिना उभाभ्यामपि वा येन केन
चिद्वा । न तावदाद्यः स्वयं दोषं जानतापि दूषणान्तरापरिस्फूर्त्तौ
यद्ययं दोषं न प्रतिसन्धास्यति तदाभीष्टमेव अथ प्रतिसन्धास्यति
तदानीमन्यथापि ममास्फुरद्दोषान्तरस्य पराजये अनेन कक्षान्तरा
रूढ़ायां कथायां शाखान्तरं वा सङ्क्रमितुमवकाशमासादयिष्यामी-
त्यभिप्रायवतोऽल्पप्रज्ञस्य मयि वदत्यसत्पक्षोऽपि निर्व्वहतीति लोके
प्रकर्षदर्शनार्थं कथमपि ग्रन्थकारादिभिरुक्तस्य वा तथाविधप्रतिहेतो
र्निर्व्वाहार्थमन्यानुयुक्तस्य प्रौढ़प्रज्ञस्य स्फुरद्दोषेणापि प्रतिहेतुना
सत्प्रतिपक्षीकरणदर्शनात् । तत्र परेण दोषानुद्भावने जयस्यापिभावात् ।
किञ्च प्रतीयमानता यदि निश्चीयमानता विवक्षिता तदानीमसम्भव
एव यतो विरुद्धार्थयोरेकस्यावश्यं दोषः स च कस्येति तदा निर्द्धार
यितुमशक्यतया प्रतिहेतावपि तत्संशयात् । अथ सम्भावना प्रतीयमा-
नता तथोद्भावनसम्भावना दूषयन्तो यदुच्यामस्तदेव दूषणमतिदेष्टव्यम् ।
नापि द्वितीयतृतीयचतुर्थाः परबुद्धेर्दुरवधारणतया परस्यासिद्ध्यादि
विरहिणा बुद्धिरत्र भविष्यतीत्ययमेऽवधारयितुं प्रमाणाभावेनाशक्य-
त्वात् कथं सत्प्रतिपक्षतां प्रतिज्ञाय व्युत्पादयेत् । प्रश्नान्तरञ्चात्र निरू
पयिष्यामः एतेनासिद्धिविरोधकालात्ययापदेशव्यभिचारवत्तया व्याप्ति

